तिष्ठापयति. देवो देवी धर्मणासूर्यः शुचिरिति तेन सूर्यं नातिशंसति. यद् गायत्री च जगती च ते द्वे बृहत्यौ तेन बृहतीं नातिशंसति. विश्वस्य देवीमृचयस्य जन्मनो,नयारोषातिन ग्रभदिति द्विपदां शंसति. चितैधमुक्थमिति ह स्म वा एतदाचक्षते. यदेतदाश्विनं निर्ऋतिर्ह स्म पाशिन्युपास्ते; यदेव होता परिधास्यत्यथ पाशान्प्रति मोक्ष्यामीति त-तो वा एतां बृहस्पतिर्द्विपदामपश्यन्नयारोषाति न ग्रभदिति तया निर्ऋत्याः पाशिन्या अधराचः पाशानपास्यत्तद्यदेतां द्विपदां होता शंसति. निर्ऋत्या एव तत्पाशिन्या अधराचः पाशानपास्यति. स्वस्त्येव होता-मुच्यते; सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद. मृचयस्य जन्मन इत्यसौ वाव मर्चयतीव तेन सूर्यं नातिशंसति. यद् द्विपदा पुरुषच्छंदसं सा सर्वाणि छंदांस्यभ्याप्ता तेन बृहतीं नाति शंसति ॥ १० ॥

ब्राह्मणस्पत्यया परि दधाति. ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवैनं तदं-ततः प्रतिष्ठापयति;एवा पित्रे विश्वदेवाय वृष्ण इत्येतया परि दध्यात्प्र-जाकामः पशुकामो; बृहस्पते सुप्रजा वीरवंत इति प्रजया वै सुप्रजा वीरवान्वयं स्याम पतयो रयीणामिति प्रजावान् पशुमान् रयिमान् वीर-वान् भवति यत्रैवं विद्वानेतया परि दधाति.बृहस्पते अति यदर्यो अर्हा-दित्येतया परि दध्यात्तेजस्कामो ब्रह्मवर्चसकामो ऽतीवान्यान्ब्रह्म-वर्चसमर्हति.द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्म-वर्चसं भाति. यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं;ब्रह्मवर्चसी ब्रह्मयशसी भवति यत्रैवं विद्वानेतया परि दधाति. तस्मादेवं विद्वानेत-येव परि दध्याद्ब्राह्मणस्पत्या तेन सूर्यं नातिशंसति. यद् त्रिष्टुभं त्रिः शंसति; सा सर्वाणि छंदांस्यभ्याप्ता तेन बृहतीं नातिशंसति. गायत्र्या

च त्रिष्टुभा च वषट्कुर्याद् ब्रह्म वै गायत्री वीर्यं त्रिष्टुब्ब्रह्मणैव तद्वीर्यं सं दधाति. ब्रह्मवर्चसी ब्रह्मयशसी वीर्यवान् भवति यत्रैवं विद्वान् गायत्र्या च त्रिष्टुभा च वषट्करोति. अश्विना वायुना युवं सुदक्षा, उभा पिबतमश्विनेति गायत्र्या च विराजा च वषट्कुर्याद्; ब्रह्म वै गायत्र्यन्नं विराड् ब्रह्मणैव तदन्नाद्यं सं दधाति. ब्रह्मवर्चसी ब्रह्मयशसी भवति, ब्रह्माद्यमन्नमत्ति यत्रैवं विद्वान् गायत्र्या च विराजा च वषट्करोति. तस्मादेवं विद्वान्गायत्र्याचैव विराजा च वषट्कुर्यात्. प्रवामंधांसिमद्यान्यस्थुर्, उभा पिबतमश्विनेत्येताभ्यां ॥ ११ ॥

चतुर्विंशमेतदहरुपयंत्यारंभणीयमेतेन वै संवत्सरमारभंत. एतेन स्तोमांश्च छंदांसि चैतेन सर्वा देवता, अनारब्धं वै तच्छंदो नारब्धा सा देवता यदेतस्मिन्नहनि नारभंते. तदारंभणीयस्यारंभणीयत्वं. चतुर्विंशः स्तोमो भवति. तच्चतुर्विंशस्य चतुर्विंशत्वं; चतुर्विंशतिर्वा अर्धमासा; अर्धमासश एव तत्संवत्सरमारभंत. उक्थ्यो भवति; पशवो वा उक्थानि पशूनामवरुध्यै. तस्य पंचदश स्तोत्राणि भवंति. पंचदश शस्त्राणि समासो मासश एव तत्संवत्सरमारभंते. तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रियास्तावंति संवत्सरस्याहान्यहश एव तत्संवत्सरमारभंते: ऽग्निष्टोम एतदहः स्यादित्याहुरग्निष्टोमो वै संवत्सरो न वा एतदन्यो ऽग्निष्टोमादहर्दाधार न विव्याचेति स यद्यग्निष्टोमः स्यादष्टाचत्वारिंशास्त्रयः पवमानाः स्युश्चतुर्विंशानीतराणि स्तोत्राणि तद्‌ षष्टिश्चैव त्रीणि च शतानि स्तोत्रियास्तावंति संवत्सरस्याहान्यहश एव तत्संवत्सरमारभंत. उक्थ्य एव स्यात्पशुसमृद्धो यज्ञः पशुसमृद्धं सत्रं सर्वाणि चतुर्विंशानि स्तोत्राणि प्रत्यक्षाध्येतदहश्चतुर्विंशं तस्मादुक्थ्य एव स्यात् ॥ १२ ॥

बृहद्रथंतरे सामनी भवत; एते वै यज्ञस्य नावौ संपारिण्यौ. यद्

हद्रथंतरे ताभ्यामेव तत्संवत्सरं तरंति. पादौ वै बृहद्रथंतरे शिर एतद-हः पदाभ्यामेव तच्छ्रियं शिरोऽभ्यायंति. पक्षौ वै बृहद्रथंतरे; शिर एत-तदहः पक्षाभ्यामेव तच्छ्रियं शिरोऽभ्यायुवते. ते उभे न समवसृज्ये; य उभे समवसृजेयुर्यथैव छिन्ना नौर्बंधनात्तीरं तीरमृछंती प्लवेतैवमेव ते सत्रिणस्तीरं तीरमृछंतः प्लवेरन्. य उभे समवसृजेयुस्तद्यदि रथं-तरमवसृजेयुर्बृहतैवेमे अनवसृष्टे. अथ यदि बृहदवसृजेयू रथंतर-णैवेमे अनवसृष्टे; यद्वै रथंतरं तद्वैरूपं. यद्बृहत्तद्वैराजं यद्रथंतरं तच्छाक्वरं यद्बृहत्तद्रैवतमेवमेते उभे अनवसृष्टे भवतो; ये वा एवं विद्वांस एतदहरुपयंत्याप्त्वा वै ते ऽहःशः संवत्सरमाप्त्वार्धमासश आप्त्वा मासश आप्त्वा स्तोमांश्च छंदांसि च आप्त्वा सर्वा देवता स्तप एव तप्यमानाः सोमपीथं भक्षयंतः संवत्सरमभिपुण्वंत आसते; ये वा अत ऊर्ध्वं संवत्सरमुपयंति. गुरुं वै ते भारमभि नि दधते; सं वै गुरुर्भारः शृणात्यथ य एनं परस्तात् कर्मभिराप्त्वा ऽवस्तादुपैति स वै स्वस्ति संवत्सरस्य पारमश्नुते ॥ १३ ॥

यद्वै चतुर्विंशं तन्महाव्रतं; बृहद्दिवे नात्र होता रेतः सिंचति. तददो महाव्रतीयेनान्हा प्र जनयति. संवत्सरे संवत्सरे वै रेतः सिक्तं जायते. तस्मात्समानं बृहद्दिवो निष्केवल्यं भवत्येष ह वा एनं परस्तात्कर्मभि-राप्त्वा वस्तादुपैति य एवं विद्वानेतदहरुपैति. स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. यो वै संवत्सरस्यावारं च पारं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते ऽतिरात्रो वा. अस्य प्रायणीयो वार-मुदयनीयः पारं स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. यो वै संवत्सरस्यावरोधनं चोद्रोधनं च वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते ऽतिरात्रो ऽवा. अस्य प्रायणीयो ऽवरोधनमुदयनीय उद्रो-धनं; स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. यो वै संवत्सरस्य

प्राणोदानौ वेद स वै स्वस्ति संवत्सरस्य पारमश्नुते ऽतिरात्रौ वा ऽभ्य प्रायणीयः प्राण उदान उदयनीयः स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ १४ ॥ इत्यैतरेयब्राह्मणे चतुर्थपंचिकाया द्वितीयोऽध्यायः ॥ २ ॥

ज्योतिर्गौरायुरिति स्तोमैर्यन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयुः स एवैष उत्तरस्त्र्यहो ज्योतिर्गौरायुरिति त्रीण्यहानि गौरायुर्ज्योतिरिति त्रीण्ययं वै लोको ज्योतिरसौ लोको ज्योतिस्त एते ज्योतिषी उभयतः सं लोके ते तेनैतेनोभयतो ज्योतिषा षळहेन यंति. तद्यदेतेनोभयतो ज्योतिषा षळहेनयंत्यनयोरेव तल्लोकयोरुभयतः प्रति तिष्ठंतो यंत्यस्मिंश्च लोके ऽमुष्मिंश्चोभयोः परि यन्ना एतदेव चक्रं यदभिप्लवः षळहस्तस्य यावभितो ऽग्निष्टोमौ तौ प्रधी, चत्वारो मध्य उक्थ्यास्तन्नभ्यं गच्छति. वैवर्तमानेन यत्र कामयते तत्स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. यो वै तद्वेद यत्प्रथमः षळहः स वै स्वस्ति संवत्सरस्य पारमश्नुते, यस्तद्वेद यद्द्वितीयो यस्तद्वेद यत्तृतीयो यस्तद्वेद यच्चतुर्थो यस्तद्वेद यत्पंचमः ॥ १५ ॥

प्रथमं षळहमुपयंति. षळहानि भवंति, षड्वा ऋतव ऋतुश एव तत्संवत्सरमाप्नुवंत्यृतुशः संवत्सरे प्रतितिष्ठंतो यंति. द्वितीयं षळहमुपयंति; द्वादशाहानि भवंति; द्वादश वै मासा, मासश एव तत्संवत्सरमाप्नुवंति. मासशः संवत्सरे प्रतितिष्ठंतो यंति. तृतीयं षळहमुपयंत्यष्टादशाहानि भवंति. तानि द्वेधा नवान्यानि नवान्यानि; नव वै प्राणा नव स्वर्गा लोकाः; प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवंति. प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठंतो यंति. चतुर्थं षळहमुपयंति. चतुर्विंशतिरहानि भवंति; चतुर्विंशतिर्वा अर्धमासा; अर्धमासश एव तत्संवत्सरमाप्नुवंत्यर्धमासशः संवत्सरे प्रतितिष्ठंतो यंति; पंचमं

षळहमुपयंति, त्रिंशदहानि भवंति. त्रिंशदक्षरा वै विराड् विराळं नाद्यं विराजमेव तन्मासि मास्यभिसंपादयंतो यंत्यन्नाद्यकामाः खलु वै सत्रमासत. तद्यद्विराजं मासि मास्यभिसंपादयंतो यंत्यन्नाद्यमेव तन्मासि मास्यवरुंधाना यंत्यस्मै च लोकायामुष्मै चोभाभ्यां ॥ १६ ॥

गवामयनेन यंति; गावो वा आदित्या आदित्यानामेव तदयनेन यंति. गावो वै सत्रमासत; शफाँ छृंगाणि सिषासत्यस्तासां दशमे मासि शफाः शृंगाण्यजायंत. ता अब्रुवन् यस्मै कामायादीक्षामह्या पाम तमुत्तिष्ठामेति ता या उदतिष्ठंस्ता एताः शृंगिण्यो; ऽथ याः समापयिष्यामः संवत्सरमित्यासत; तासामश्रद्धया शृंगाणि प्रावर्तंत. ता एतास्तूपरा ऊर्जं त्वसुन्वंस्तस्मादु ताः सर्वानृतून्प्राप्त्वोत्तरमुत्तिष्ठंत्यूर्जं ह्यसुन्वन्त्सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः; सर्वस्य प्रेमाणं सर्वस्य चारुतां गच्छति य एवं वेद. आदित्याश्च ह वा अंगिरसश्च स्वर्गे लोके स्पर्धंत. वयं पूर्व एष्यामो वयमिति ते हादित्याः पूर्वे स्वर्गं लोकं जग्मुः, पश्चेवांगिरसः षष्ठ्यां वा वर्षेषु. यथा वा प्रायणीयो ऽतिरात्रश्चतुर्विंश उक्थ्यः; सर्वे ऽभिप्लवाः षळहा आक्षयंत्यन्यान्यहानि तदादित्यानामयनं. प्रायणीयो ऽतिरात्रश्चतुर्विंश उक्थ्यः, सर्वे पृष्ठ्याः षळहा आक्षयंत्यन्यान्यहानि तदंगिरसामयनं. सा यथा स्रुतिरंजसायन्येवमभिप्लवः षळहः; स्वर्गस्य लोकस्याथ यथा महापथः पर्याण एवं पृष्ठ्यः षळहः स्वर्गस्य लोकस्य; तद्यदुभाभ्यां यंत्युभाभ्यां वै यन्न रिष्यत्युभयोः कामयोरुपाप्त्यै यश्चाभिप्लवे षळहे यश्च पृष्ठ्ये ॥ १७ ॥

एकविंशमेतदहरुपयंति विषुवंतं मध्ये संवत्सरस्यैतेन वै देवा एकविंशेनादित्यं स्वर्गाय लोकायोदयछंस्स एष इत एकविंशस्तस्य दशावस्तादहानि दिवाकीर्त्यस्य भवंति, दश परस्तान्मध्य एकविंश उभयतो विराजि प्रतिष्ठित; उभयतो हि वा एष विराजि प्रतिष्ठित

स्तस्मादेषोंतरेमांल्लोकान्यन्न व्यथते. तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवन्. स्तोमा वै त्रयः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं त्रिभिः स्वर्गैर्लोकैः परस्तात्प्रत्यस्तभ्नुवन्. स्तोमा वै त्रयः स्वर्गा लोकास्त त्त्रयोऽवस्तात्सप्तदशा भवंति; त्रयः परस्तान्मध्य एष एकविंश उभयतः स्वरसामभिर्धृत; उभयतो हि वा एष स्वरसामभिर्धृतस्तस्मादेषोंतरेमांल्लोकान्यन्न व्यथते. तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं परमैः स्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तस्य पराचोऽतिपातादबिभयुस्तं परमैः स्वर्गैर्लोकैः परस्तात् प्रत्यस्तभ्नुवन्स्तोमा वै परमाः स्वर्गा लोकास्तत्त्रयोऽवस्तात्सप्तदशा भवंति. त्रयः परस्तात्ते द्वौ द्वौ संपद्यत्त्रयश्चतुस्त्रिंशा भवंति. चतुस्त्रिंशो वै स्तोमानामुत्तमस्तेषु वा एष एतदध्याहितस्तपति; तेषु हि वा एष एतदध्याहितस्तपति. स वा एष उत्तरोऽस्मात् सर्वस्माद् भूताद्भविष्यतः सर्वमेवेदमतिरोचते यदिदं किंचोत्तरो भवति. यस्मादुत्तरो बुभूषति तस्मादुत्तरो भवति य एवं वेद ॥ १८ ॥

स्वरसाम्न उपयंतीमे वै लोकाः; स्वरसामान इमान्वै लोकान्स्वरसामभिरस्पृण्वंस्तत्स्वरसाम्नां स्वरसामत्वं. तद्यत्स्वरसाम्न उपयंत्येष्वेवैनं तल्लोकेष्वाभजंति. तेषां वै देवाः सप्तदशानां प्रह्लयादबिभयुः. समा इव वै स्तोमा अविगूळ्हा इवेमे ह न प्रह्लियेरन्निति तांत्सर्वैः स्तोमैरवस्तात्पर्यार्षंत्सर्वैः पृष्ठैः परस्तात्तद्यदभिजित्सर्वस्तोमोऽवस्तात् भवति. विश्वजित्सर्वपृष्ठः परस्तात्तत्सप्तदशानुभयतः पर्यृषंति धृत्या अप्रह्लयाय. तस्य वै देवा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तं पंचभी रश्मिभिरुदवयन्; रश्मयो वै दिवाकीर्त्यानि महादिवाकीर्त्यं पृष्ठं भवति. विकर्णं ब्रह्म साम भासमग्निष्टोमसामोभे बृहद्रथंतरे पवमानयोर्भवत

स्तदादित्यं पंचभी रश्मिभिरुद्यंति धृत्या अनवपातायोदित आदित्ये प्रातरनुवाकमनुब्रूयात्सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति. सौर्यं पशुमन्यं- गश्वेतं सवनीयस्योपालंभ्यमालभेरंत्सूर्यदेवत्यं ह्येतदहरेकविंशतिं सामिधेनीरनुब्रूयात्प्रत्यक्षाध्येतदहरेकविंशमेकपंचाशतं द्विपंचाशतं वा शस्त्वा मध्ये निविदं दधाति. तावतीरुत्तराः शंसति. शतायुर्वै पुरुषः शतवीर्यः शतेंद्रिय आयुष्येवैनं तद्वीर्य इंद्रिये दधाति ।।१९।।

दूरोहणं रोहति. स्वर्गो वै लोको दूरोहणं; स्वर्गमेव तं लोकं रोहति य एवं वेद. यदेव दूरोहणा३ं असौ वै दूरोहो यो ऽसौ तपति कश्चिद्वा अत्र गच्छति. स यद्दूरोहणं रोहत्येतमेव तद्रोहति हंसवत्यारोहति- हंसःशुचिषदित्येष वै हंसःशुचिषद्वसुरंतरिक्षसदित्येष वै वसुरंत- रिक्षसत्होता वेदिषदित्येष वै होता वेदिषद्; अतिथिर्दुरोणसदित्येष वा अतिथिर्दुरोणसन्नृषदित्येष वै नृषद्वरसदित्येष वै वरसद्वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति, ऋतसदित्येष वै सत्यसद्; व्योमसदित्येष वै व्योमसद्व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्त- पति; अब्जा इत्येष वा अब्जा अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति; गोजा इत्येष वै गोजा; ऋतजा इत्येष वै सत्यजा; अद्रिजा इत्येष वा अद्रिजा; ऋतमित्येष वै सत्यमेव एतानि सर्वाण्येष ह वा अस्य छंदस्सु प्रत्यक्षतमादिव रूपं. तस्माद्यत्र क्वच दूरोहणं रोहेत्संसवत्यैवरोहेत्ताक्ष्यं स्वर्गकामस्य रोहेत्ताक्ष्यो ह वा एतं पूर्वो ऽध्वानमैद्यत्रादो गायत्री सुपर्णो भूत्वा सोममाहरत्तद्यथा क्षेत्रज्ञमध्वनः पुर एतारं कुर्वीत तादृक्तद्यदेवताक्ष्यं ऽयं वै ताक्ष्यो यो ऽयं पवत एष स्वर्गस्य लोकस्याभिवोळ्हा. त्यमू षु वाजिनं देवजूतमित्येष वै वाजी देवजूतः, सहावानं तरुतारं रथानामित्येष वै सहावांस्तरुतैष हीमांल्लोकांत्सद्यस्तरति; अरिष्टनेमिं पृतनाज-

माशुमित्येष वा अरिष्टनेमिः पृतनाजिदाशुः; स्वस्तय इति स्वस्तिता-माशास्ते. तार्क्ष्यमिहाहुवेमेति व्हयत्येवैनमेतद्. इंद्रस्येव रातिमाजोहु-वानाः स्वस्तय इति स्वस्तितामेवाशास्ते. नावमिवारुहेमेति समेवैन-मेतदधिरोहति स्वर्गस्य लोकस्य समष्ट्यै संपत्त्यै संगत्या; उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषामेतीमे एवैतदनुमंत्रयत आच पराच मेष्यं. त्सद्यश्चिद्यः शवसा पंचकृष्टीः सूर्य इव ज्योतिषापस्ततानेति प्रत्यक्षं सूर्यमभिवदति. सहस्रसाः शतसा अस्य रंहिर्न स्मा वरंते युवतिं न शर्यामित्याशिषमेवैतनाशास्त आत्मने च यजमानेभ्यश्च ॥२०॥

आहूय दूरोहणं रोहति. स्वर्गो वै लोको दूरोहणं. वागाहावो ब्रह्म वै वाक्स यदाव्हयते तद् ब्रह्मणाहावेन स्वर्गं लोकं रोहति. स पच्छः प्रथमं रोहतीमं तं लोकमाप्नोत्यथार्धर्चशोंतरिक्षं तदाप्नोत्यथ त्रिपद्यामुं तं लोकमाप्नोत्यथ केवल्या तदेतस्मिन्प्रति तिष्ठति य एष तपति. त्रिपद्या प्रत्यवरोहति यथाशाखां धारयमाणस्तदमुष्मिं लोके प्रतितिष्ठत्यर्धर्चशोंतरिक्षे पच्छो ऽस्मिं लोक आप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिं लोके प्रति तिष्ठंत्यथ य एककामाः स्युः स्वर्गकामाः पराचमेव तेषां रोहेत्ते जयेयुर्हैव स्वर्गं लोकं नेत्त्वेवास्मिं लोके ज्योगिव वसेयुर्मिथुनानि सूक्तानि शस्यंते. त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छंदांसि पशूनामवरुध्यै ॥ २१ ॥

यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणो ऽर्ध एवं पूर्वो ऽर्धो विषुवतो यथोत्तरो ऽर्ध एवमुत्तरो ऽर्धो ऽविषुवतस्तस्मादुत्तर इत्याचक्षते; प्रबाहुक्सतः शिर एव विषुवान्बिदलसंहित इव वै पुरुषस्तस्यापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते. तदाहुर्विषुवत्येवैतदहः शंसेद्विषुवान्वा एतदुक्थानामुक्थं विषुवान् विषुवानिति ह विषुवंतो भवंति श्रेष्ठताम-श्नुवत इति तत्तन्नादृत्यं संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं दध-

नो यंति. यानि वै पुरा संवत्सराद्रेतांसि जायंते, यानि पंचमास्यानि यानि षाण्मास्यानि स्रीव्यंति वै तानि न वैतैर्भुंजतेथ यान्येव दशमास्यानि जायंते, यानि सांवत्सरिकाणि तैर्भुंजते. तस्मात्संवत्सर एवैतदहः शंसेत्संवत्सरो ह्येतदहराप्नोति, संवत्सरं ह्येतदहराप्नुवंत्येष ह वै संवत्सरेण पाप्मानमपहत एष विषुवतांगेभ्यो हैव मासैः पाप्मानमपहते; शीर्ष्णो विषुवताप संवत्सरेण पाप्मानं हते ऽप विषुवता य एवं वेद. वैश्वकर्मणमृषभं सवनीयस्योपालभ्यमालभेरं; द्विरूपमुभयत एतं महाव्रतीये ऽहनींद्रो वै वृत्रं हत्वा विश्वकर्माभवत्प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्माभवत्संवत्सरो विश्वकर्मैंद्रमेव तदात्मानं प्रजापतिं संवत्सरं विश्वकर्माणमाप्नुवंतींद्र एव तदात्मनि प्रजापतौ संवत्सरे विश्वकर्मण्यंततः प्रति तिष्ठंति· प्रति तिष्ठति य एवं वेद य एवं वेद ॥ २२ ॥

इत्यैतरेयब्राह्मणे चतुर्थपंचिकायां तृतीयोऽध्यायः ॥ ३ ॥

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपो तप्यत; स तपस्तप्त्वेमं द्वादशाहमपश्यदात्मन एवांगेषु च प्राणेषु च ; तमात्मन एवांगेभ्यश्च प्राणेभ्यश्च द्वादशधा निरमिमीत. तमाहरत्तेनायजत. ततो वै सो भवदात्मना प्र प्रजया पशुभिरजायत; भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद. सो कामयत कथं नु गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धिमृध्नुयामिति? तं वै तेजसैव पुरस्तात्पर्यभवच्छंदोभिर्मध्यतो ऽक्षरैरुपरिष्टाद् गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोति य एवं वेद. यो वै गायत्रीं पक्षिणीं चक्षुष्मतीं ज्योतिष्मतीं भास्वतीं वेद गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेत्येषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती यद् द्वादशाहस्तस्य यावभितो ऽतिरात्रौ तौ पक्षौ यावंतराग्निष्टोमौ ते चक्षुषी; ये ऽष्टौ मध्य-

उक्थ्याः स आत्मा; गायत्र्या पक्षिण्या चक्षुष्मत्या ज्योतिष्मत्या भास्वत्या स्वर्गं लोकमेति य एवं वेद ॥ २३ ॥

त्रयश्च वा एते त्र्यहा आ दशममहरा द्वावतिरात्रौ यद् द्वादशाहो. द्वादशाहानि दीक्षितो भवति यज्ञिय एव तैर्भवति. द्वादश रात्रीरुपसद उपैति; शरीरमेव ताभिर्धूनुते; द्वादशाहं प्रसुतो भूत्वा शरीरं धूत्वा शुद्धः पूतो देवता अप्येति य एवं वेद. षट्त्रिंशदहो वा एष यद् द्वादशाहः; षट्त्रिंशदक्षरा वै बृहती, बृहत्या वा एतदयनं यद् द्वादशाहो बृहत्या वै देवा इमां लोकानाश्नुवत. ते वै दशभिरेवाक्षरै-रिमं लोकमाश्नुवत दशभिरंतरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दि-शो द्वाभ्यामेवास्मिन् लोके प्रत्यतिष्ठन्; प्रति तिष्ठति य एवं वेद. तदाहुर्यदन्यानि छंदांसि वर्षीयांसि भूयोक्षरतराण्यथ कस्मादेता बृहतीत्याचक्षत इत्येतया हि देवा इमां लोकानाश्नुवत. ते वै दशभि-रेवाक्षरैरिमं लोकमाश्नुवत दशभिरंतरिक्षं दशभिर्दिवं चतुर्भिश्चत-स्रो दिशो द्वाभ्यामेवास्मिं लोके प्रत्यतिष्ठन्. तस्मादेतां बृहतीत्याचक्ष-तेऽश्नुते यद्यत्कामयते य एवं वेद ॥ २४ ॥

प्रजापतियज्ञो वा एष यद् द्वादशाहः; प्रजापतिर्वा एतेनाग्रे यजत द्वादशाहेन. सो ब्रवीदृतूंश्च मासांश्च याजयत मा द्वादशाहेनेति तं दीक्षयित्वा ऽनपक्रमं गमयित्वा ब्रुवं देहि नु नो ऽथ त्वा याजयिष्याम इति तेभ्य इषमूर्जं प्रायच्छत्सैषोर्गृतुषु च मासेषु च निहिता ददतं वैतं तमयाजयंस्तस्माद् ददद्याज्यः प्रतिगृण्हंतो वैतं तमयाजयंस्तस्मात्प्रति गृण्हता याज्यमुभये राध्नुवंति य एवं विद्वांसो यजंते च याजयंति च. ते वा इम ऋतवश्च मासाश्च गुरव इवामन्यंत. द्वादशाहे प्रतिगृह्यते ब्रुवं-न्प्रजापतिं याजय नो द्वादशाहेनेति स तथेत्यब्रवीत्ते वै दीक्षध्वमिति ते पूर्वपक्षाः पूर्वे दीक्षंत ते पाप्मानमपाहत; तस्मात्ते दिवेव दिवेव ह्यपहत

पाप्मानो ऽपरपक्षा अपरे दीक्षंत; तेन तरां पाप्मानमपाहत. तस्मात्ते तम इव तम इव ह्यनपहत पाप्मानस्तस्मादेवं विद्वां दीक्षमाणेषु पूर्वः पूर्व एव दिदीक्षिषेताप पाप्मानं हंते य एवं वेद. स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत्ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एते ऽन्योन्यस्मिन्प्रतिष्ठिता एवं ह वाव स ऋत्विक्षु प्रति तिष्ठति यो द्वादशाहेन यजते. तस्मादाहुर्न पापः पुरुषो याज्यो द्वादशाहेन नेदयं मयि प्रति तिष्ठादिति ज्येष्ठयज्ञो वा एष यद्द्वादशाहः, स वै देवानां ज्येष्ठो य एतेनाग्रे यजत. श्रेष्ठयज्ञो वा एष यद् द्वादशाहः स वै देवानां श्रेष्ठो य एतेनाग्रे यजत. ज्येष्ठः श्रेष्ठो यजेत कल्याणीह समाभवति. न पापः पुरुषो याज्यो द्वादशाहेन नेदयं मयि प्रति तिष्ठादितींद्राय वै देवा ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठंत. सो ब्रवीद्बृहस्पतिं याजय मा द्वादशाहेनेति तमयाजयत्ततो वै तस्मै देवा ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठंत. तिष्ठंते ऽस्मै स्वा ज्यैष्ठ्याय श्रैष्ठ्याय समस्मिन् स्वाः श्रेष्ठतायां जानते य एवं वेद. ऊर्ध्वो वै प्रथमस्त्र्यहस्तिर्यङ्मध्यमो ऽर्वाङुत्तमः; स यदूर्ध्वः प्रथमस्त्र्यहस् तस्मादयमग्निरूर्ध्व उद्दीप्यत; ऊर्ध्वा ह्येतस्य दिग्यत्तिर्यङ् मध्यमस्तस्मादयं वायुस्तिर्यङ् पवते तिरश्चीरापो वहंति; तिरश्ची ह्येतस्य दिग्यदर्वाङुत्तमस्तस्मादसावर्वाङ् तपत्यर्वाङ् वर्षत्यर्वांचि नक्षत्राण्यर्वाची ह्येतस्य दिक्; सम्यंचो वा इमे लोकाः सम्यंच एते त्र्यहाः सम्यंचो स्मा इमे लोकाः श्रियै दीद्याति य एवं वेद ॥ २५ ॥

दीक्षा वै देवेभ्यो ऽपाक्रामत्तां वासंतिकाभ्यां मासाभ्यामन्वयुंजत. तां वासंतिकाभ्यां मासाभ्यां नोदाप्नुवंस्तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमंतिकाभ्यां मासाभ्यामन्वयुंजत. तां हैमंतिकाभ्यां

मासाभ्यांनोदाप्नुवंस्तां शैशिराभ्यां मासाभ्यामन्वयुंजत. तां शैशिराभ्यां मासाभ्यामाप्नुवन्नाप्नोति यमीप्सति, नैनं द्विषं नाप्नोति य एवं वेद. तस्मादयं क्षत्रिया दीक्षोपनमेदेतयोरेव शैशिरयोर्मासयोरागतयोर्दीक्षेत साक्षादेव तद्दीक्षायामागतायां दीक्षते प्रत्यक्षाद्दीक्षां परिगृण्हाति. तस्मादेतयोरेव शैशिरयोर्मासयोरागतयोर्यें चैव ग्राम्याः पशवो ये चारण्या अणिमाणमेव तत्परुषिमाणं नियंति. दीक्षारूपमेव तदुप निप्लवंते. स पुरस्ताद्दीक्षायाः प्राजापत्यं पशुमालभते. तस्य सप्तदश सामिधेनीरनुब्रूयात्सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै तस्याप्रियो जामदग्न्यो भवंति. तदाहुर्यदन्येषु पशुषु यथ ऋष्याप्रियो भवंत्यथ कस्मादस्मिन्त्सर्वेषां जामदग्न्य एवेति? सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः सर्वरूप एष पशुः सर्वसमृद्धस्तद्यज्जामदग्न्यो भवंति सर्वरूपतायै सर्वसमृध्यै. तस्य वायव्यः पशुपुरोळाशो भवति. तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्माद्वायव्यः पशुपुरोळाशः क्रियत इति? प्रजापतिर्वै यज्ञो यज्ञस्यायातयामताया इति ब्रूयाद्यद्वायव्यस्तेन प्रजापतेर्नेति वायुर्ह्येव प्रजापतिस्तदुक्तमृषिणा पवमानः प्रजापतिरिति सत्रमुचेत्स न्युप्यामीन् यजेरन्त्सर्वे दीक्षेरन्त्सर्वे सुनुयु र्वसंतमभ्युदवस्यंत्यूर्ग्वै वसंत इषमेव तदूर्जमभ्युदवस्यति ॥ २६ ॥

छंदांसि वा अन्योन्यस्यायतनमभ्यध्यायन्. गायत्री त्रिष्टुभश्च जगत्यै चायतनमभ्यध्यायत्; त्रिष्टुब् गायत्र्यै च जगत्यै च; जगती गायत्र्यै च त्रिष्टुभश्च ततो वा एतं प्रजापतिर्व्यूळ्हछंदसं द्वादशाहमपश्यत्तमाहरत्तेनायजत. तेन स सर्वान्कामांश्छंदांस्यगमयत्सर्वान्कामान् गच्छति य एवं वेद. छंदांसि व्यूहत्ययातयामतायै छंदांस्येव व्यूहति तद्यथादो ऽश्वैर्वानळुद्भिर्वान्यैरन्यैरश्रांततरैरश्रांततरैरु-

पाविमोकं यांत्येवेममेवैतच्छंदोभिरन्यैरन्यैरश्रांततरैरश्रांततरैरुपाविमोकं स्वर्गं लोकं यंति यच्छंदांसि व्यूहतीमौ वै लोकौ सहास्तां तौ व्यैतां नावर्षं न समतपत्ते पंचजना न समजानत. तौ देवाः समनयंस्तौ संयंतावेतं देवविवाहं व्यवहेतां. रथंतरेणैवेयममूं जिन्वति बृहता साविमां नौधसेनैवेयममूं जिन्वति श्यैतेनासाविमां धूमेनैवेयममूं जिन्वति वृष्ट्या साविमां देवयजनमेवेयममुष्यामदधात्पशूनसावस्यामेतद्वा इयममुष्यां देवयजनमदधाद्यदेतच्चंद्रमसि कृष्णमिव. तस्मादापूर्यमाणपक्षेषु यजंत एतदेवोपेप्संत. ऊषा न सावस्यां तद्धापि तुरः कावषेय उवाचोषःपोषो जनमेजयकेति तस्मात्ह्याप्येतर्हि गव्यं मीमांसमानाः पृच्छंति संति तत्रोषाः३इति ऊषा हि पोषोऽसौ वै लोक इमं लोकमभिपर्यावर्तत. ततो वै द्यावापृथिवी अभवतां; न द्यावांतरिक्षां नांतरिक्षाद्भूमिः ॥ २७ ॥

बृहच्च वा इदमग्रे रथंतरं चास्तां; वाक्च वै तन्मनश्चास्तां; वाग्वै रथंतरं मनो बृहत्तद्बृहत्पूर्वं ससृजानं. रथंतरमत्यमन्यत तद्रथंतरं गर्भमधत्त तद्वैरूपमसृजत; ते द्वे भूत्वा रथंतरं च वैरूपं च बृहदत्यमन्येतां; तद्बृहद्गर्भमधत्त तद्वैराजमसृजत; ते द्वे भूत्वा बृहच्च वैराजं च रथंतरं च वैरूपं चात्यमन्येतां तद्रथंतरं गर्भमधत्त तच्छाक्वरमसृजत तानि त्रीणि भूत्वा रथंतरं च वैरूपं च शाक्वरं च बृहच्च वैराजं चात्यमन्यंत. तद्बृहद्गर्भमधत्त; तद्रैवतमसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् पृष्ठान्यासंस्तानि ह तर्हि त्रीणि छंदांसि. षट् पृष्ठानि नोदाप्नुवंस्स। गायत्री गर्भमधत्त; सानुष्टुभमसृजत त्रिष्टुब् गर्भमधत्त. सा पंक्तिमसृजत जगती गर्भमधत्त सातिछंदसमसृजत तानि त्रीण्यन्यानि त्रीण्यन्यानि षट् छंदांस्यासन् षट् पृष्ठानि तानि तथाकल्पंत. कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैव-

मेतां छंदसांच पृष्टानां च क्लृप्तिं विद्वां दीक्षंते दीक्षंते ॥ २८ ॥
इतिचतुर्थोध्यायः ॥ ४ ॥

अग्निर्वै देवता; प्रथममहर्वहति त्रिवृत्स्तोमो रथंतरं साम गायत्री छंदो यथा देवतमेनेन यथास्तोमं यथासाम यथाछंदसं राध्नोति य एवं वेद. यद्वा एति च प्रेति च तत्प्रथमस्यान्हो रूपं, यद्युक्तवद्यद्रथव-द्यदा शुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते. यदयं लोको ऽभ्युदितो यद्राथंतरं यद्गायत्रं यत्करिष्यदेतानि वै प्रथमस्यान्हो रूपाणि; उपप्रयंतो अध्वरमिति प्रथमस्यान्ह आज्यं भवति; प्रेति प्रथमे ऽहनि प्रथमस्यान्हो रूपं; वायवायाहि दर्शतेति प्रउगमेति प्रथमे ऽहनि प्रथमस्यान्हो रूपं. आत्वा रथं यथोतय; इदं वसो सुतमंध इति मरुत्वतीयस्य प्रतिपदनुचरौ; रथवच्च पिबवच्च प्रथमे ऽहनि प्रथमस्यान्हो रूपं; इंद्र नेदीय एदिहीति, इंद्रनिहवः प्रगाथः प्रथमे पदे देवता निरुच्यते प्रथमे हनि ऽप्रथमस्यान्हो रूपं. प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रेति प्रथमे ऽहनि प्रथमस्यान्हो रूपम्. अग्निर्नेता; त्वं सोमक्रतुभिः; पिन्वंत्यप इति धाय्याः. प्रथमेषु पदेषु देवता निरुच्यंते प्रथमे ऽहनि प्रथमस्यान्हो रूपं. प्र व इंद्राय बृहत इति मरुत्वतीयः प्रगाथः प्रेति प्रथमे ऽहनि प्रथमस्यान्हो रूपं. आयात्विंद्रो वस उप न इति सूक्तमेति प्रथमे ऽहनि प्रथमस्यान्हो रूपम्. अभि त्वा शूर नोनुमो; अभि त्वा पूर्वपीतय इति रथंतरं पृष्टं भवति राथंतरे ऽहनि प्रथमे ऽहनि प्रथमस्यान्हो रूपं. यद्वावान पुरुतमं पुराषाळिति धाय्या. वृत्रहेंद्रो नामान्यप्रा इत्येति प्रथमे ऽहनि प्रथमस्यान्हो रूपं. पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान् प्रथमे ऽहनि प्रथमस्यान्हो रूपं. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यं; पुरस्तात्सूक्तस्य शंसति; स्वस्त्ययनं वै तार्क्ष्यः; स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते; स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद ॥ २९ ॥

आ न इंद्रो दूरादान आसादिति सूक्तमेति प्रथमे ऽहनि प्रथमस्यान्हो रूपं. संपातौ भवतो निष्केवल्यमरुत्वतीययोर्निविद्धाने. वामदेवो वा इमां लोकानपश्यत्तांत्संपातैः समपतद्यत्संपातैः समपतत्तत्संपातानां संपातत्वं. तद्यत्संपातौ प्रथमे ऽहनि शंसति स्वर्गस्य लोकस्य समष्ट्यै संपत्यै संगत्यै. तत्सवितुर्वृणीमहे ; अद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरे ऽहनि प्रथमे ऽहनि प्रथमस्यान्हो रूपं. युंजते मन उत युंजते धिय इति सावित्रं युक्तवत्प्रथमे ऽहनि प्रथमस्यान्हो रूपं. प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति द्यावापृथिवीयं प्रेति प्रथमे ऽहनि प्रथमस्यान्हो रूपम्. इहेह वो मनसा बंधुता नर इत्यार्भवं यद्वा एति च प्रेति च तत्प्रथमस्यान्हो रूपं. तद्यत्प्रेति सर्वमभविष्यत् प्रैष्यंनेवास्माल्लोकाद्यजमाना इति तद्यदिहेह वो मनसा बंधुता नर इत्यार्भवं. प्रथमे ऽहनि शंसत्ययं वै लोक इहेहास्मिन्नेवैनांस्तंल्लोके रमयति. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं. प्रथमे पदे देवता निरुच्यंते. प्रथमे ऽहनि प्रथमस्यान्हो रूपं. महांतं वा एते ऽध्वानमेष्यंतो भवंति ये संवत्सरं वा द्वादशाहं वासते. तद्यद्देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे ऽहनि शंसति स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. येषां चैवं विद्वानेतद्धोता देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं प्रथमे ऽहनि शंसति. वैश्वानराय पृथुपाजसे विप इत्याग्निमारुतस्य प्रतिपत्प्रथमे पदे देवता निरुच्यते. प्रथमे ऽहनि प्रथमस्यान्हो रूपं. प्र त्वक्षसः प्र तवसो विरप्शिन इति मारुतं प्रेति प्रथमे ऽहनि प्रथमस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्यां पुरस्तात्सूक्तस्य शंसति. स्वस्त्ययनं वै जातवेदस्याः स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते. स्वस्ति संवत्सरस्य पारमश्नुते य एवं वेद. प्र तव्यसीं नव्यसीं धीतिमग्नय इति जातवेदस्यं प्रेति प्रथमे ऽहनि प्रथ-

मस्यान्हो रूपं. समानमाग्निमारुतं भवति यच्चाग्निष्टोमे यद्दै यज्ञे समानं क्रियते तत्प्रजा अनुसमनंति. तस्मात्समानमाग्निमारुतं भवति ॥ ३० ॥

इंद्रो वै देवता द्वितीयमहर्वहति. पंचदशस्तोमो बृहत्साम त्रिष्टुप् छंदो यथा देवतमेनेन यथास्तोमं यथासाम यथाछंदसं राध्नोति य एवं वेद. यद्वै नेति न प्रेति यत्स्थितं: तत् द्वितीयस्यान्हो रूपं, यदूर्ध्ववद्यत्प्रतिवद्यदंतर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते. यदंतरिक्षमभ्युदितं यद्बार्हतं यत्त्रैष्टुभं यत्कुर्वद्देतानि वै द्वितीयस्यान्हो रूपाणि. अग्निं दूतं वृणीमह इति द्वितीयस्यान्ह आज्यं भवति कुर्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. वायो ये ते सहस्रिण इति प्रउगं, सुतः सोमऋतावृधेति वृधन्वद्द्वितीये हनि द्वितीयस्यान्हो रूपं. विश्वानरस्य वनस्पतिमिंद्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ वृधन्वच्चांतर्वच्च: द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. इंद्र नेदीय एदिहीत्यच्युतः प्रगाथ; उत्तिष्ठ ब्रह्मणस्पते इति ब्राह्मणस्पत्यः ऊर्ध्ववां द्वितीये ऽहनि द्वितीयस्यान्हो रूपम्. अग्निर्नेता; त्वं सोमक्रतुभिः; पिन्वंत्यप इति धाय्याः अच्युता बृहदिंद्राय गायतेति मरुत्वतीयः प्रगाथो, येन ज्योतिरजनयन्नृतावृध इति वृधन्वां द्वितीये ऽहनि द्वितीयस्यान्हो रूपम्. इंद्र सोमं सोमपते पिबेममिति सूक्तं; सजोषा रुद्रैस्तृपदावृषस्वेति वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. त्वामिध्दि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति. बार्हते ऽहनि द्वितीये ऽहनि द्वितीयस्यान्हो रूपं यद्वावानेति धाय्याच्युतोभयं शृणवच्च न इति साम प्रगाथो; यच्चेदमद्य यदुच ह्य आसीदिति बार्हते ऽहनि द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ ३१ ॥

या त ऊतिरवमा या परमेति सूक्तं. जहि वृष्ण्यानि कृणुहि पराच इति

वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. विश्वो देवस्य नेतुस्, तत्सवितुर्वरेण्यम्, आ विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हते ऽहनि द्वितीये ऽहनि द्वितीयस्यान्हो रूपम्. उदु ष्य देवः सविता हिरण्ययेति सावित्रमूर्ध्ववद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीयं; सुजन्मनि धिषणे अंतरीयत इत्यंतर्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. तक्षन्रथं सुवृतं विद्मनापस इत्यार्भवं. तक्षन् हरी इंद्रवाहा वृषण्वसू इति वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवं; वृषा केतुर्यजतो द्यामशायतेति वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. तदु शार्यातमांगिरसो वै स्वर्गाय लोकाय सत्रमासत ते ह स्मद् द्वितीयं द्वितीयमेवाहरागत्य मुह्यंति. तान्वा एतच्छार्यातो मानवो द्वितीये ऽहनि सूक्तमशंसयत्ततो वै ते प्र यज्ञमजानन्प्र स्वर्गं लोकं तद्यदेतत्सूक्तं द्वितीये ऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै. पृक्षस्य वृष्णो अरुषस्य नू सह इत्याग्निमारुतस्य प्रतिपद्वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. वृष्णे शर्धाय सुमखाय वेधस इति मारुतं वृषण्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता. यज्ञेन वर्धत जातवेदसमिति जातवेदस्यं वृधन्वद् द्वितीये ऽहनि द्वितीयस्यान्हो रूपमन्हो रूपं॥ ३२॥ इत्यैतरेयब्राह्मणे चतुर्थपंचिकायां पंचमो ऽध्यायः॥ ५॥ इतिचतुर्थपंचिका समाप्ता.

---

अथ पंचमपंचिकाप्रारंभः श्रीगणेशाय नमः॥ ओं॥ विश्वे वै देवा देवतास्तृतीयमहर्वहंति सप्तदशस्तोमो वैरूपं साम जगती छंदो यथादेवतमेनेन यथास्तोमं यथासाम यथाछंदसं राध्नोति य

एवं वेद. यद्वै समानोदर्कं तत्तृतीयस्यान्हो रूपं यदश्ववद्यदंतव-द्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदंतरूपं य-दुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितो यद्द्विरूपं यज्जागतं यत्कृतमेतानि वै तृतीयस्यान्हो रूपाणि. युक्ष्वा हि देवहू-तमाँ अश्वाँ अग्ने रथीरिवेति तृतीयस्यान्ह आज्यं भवति. देवा वै तृतीयेनान्हा स्वर्गं लोकमायंस्तानसुरा रक्षांस्यन्ववारयंत. ते वि-रूपा भवत विरूपा भवतेति भवंत आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवंत आयंस्तद्वैरूपं सामाभवत्तद्वैरूपस्य वैरू-पत्वं. विरूपः पाप्मना भूत्वा पाप्मानमपहते य एवं वेद. तान् ह स्मान्वेवागच्छंति समेव सृज्यंते तानश्वा भूत्वा पद्भिरपाघ्नत यदश्वा भूत्वा पद्भिरपाघ्नत तदश्वानामश्वत्वमश्नुते यद्यत्कामयते य एवं वेद. तस्मादश्वः पशूनां जविष्ठः; तस्मादश्वः प्रत्यङ्पदा हिनस्त्यप पाप्मानं हते य एवं वेद. तस्मादेतदश्ववदाज्यं भवति तृतीये ऽहनि तृतीयस्यान्हो रूपं. वायवायाहि वीतये, वायो याहि शिवादिव, इंद्रश्च वायवेषां सुतानाम्, आ मित्रे वरुणे वयम्, अश्विनावेह गच्छतम्, आयाह्यद्रिभिः सुतं, सजूर्विश्वेभिर्देवेभिर्, उत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगं समानोदर्कं तृतीये ऽहनि तृतीयस्यान्हो रूपं. तं तमिद्राधसे महे, त्रय इंद्रस्य सोमा इति मरुत्वतीयस्य प्रति-पदनुचरौ निनृत्तवत् त्रिवत्तृतीये ऽहनि तृतीयस्यान्हो रूपम्. इंद्र नेदीय एदिहीत्यच्युतः प्रगाथः. प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मण-स्पत्यो निनृत्तवांस्तृतीये ऽहनि तृतीयस्यान्हो रूपम्. अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वंत्यप इति धाय्या अच्युता. नकिः सुदासो रथं पर्यास नरीरमदिति मरुत्वतीयः प्रगाथः पर्यस्तवांस्तृतीये ऽहनि तृती-यस्यान्हो रूपं. त्र्यर्यमा मनुषो देवताता इति सूक्तं त्रिवत्तृतीये ऽहनि तृती-

।स्यान्हो रूपं. यद् द्याव इंद्र ते शतं, यदिंद्र यावतस्त्वमिति वैरूपं
ष्ठं भवति राथंतरे ऽहनि तृतीये ऽहनि तृतीयस्यान्हो रूपं. यद्वावानेति
ाघ्याच्युता; अभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्त-
ाति राथंतरं ह्येतदहरायतनेन. इंद्र त्रिधातु शरणमिति साम
ागाथस्त्रिवांस्तृतीये ऽहनि तृतीयस्यान्हो रूपं. त्यमू षु वाजिनं देवजूत
मेति तार्क्ष्यो ऽच्युतः ॥ १ ॥

यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं तृतीये ऽहनि
ृतीयस्यान्हो रूपं. तद् सजनीयमेतद्वा इंद्रस्येंद्रियं यत्सजनीयमे-
ास्मिन्वै शस्यमान इंद्रमिंद्रियमाविशति. तत्थाप्याहुश्छंदोगास्तृ-
ीये ऽहनि बव्हृचा इंद्रस्येंद्रियं शंसंतीति तद् गार्त्समदमेतेन वै
ृत्समद इंद्रस्य प्रियं धामोपागच्छत्स परमं लोकमजयदुपेंद्रस्य
प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद. तत्सवितुर्वृ-
णीमहे, ऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरे ऽहनि
ृतीये ऽहनि तृतीयस्यान्हो रूपं. तद्देवस्य सवितुर्वार्यं महदिति सावि-
त्रमंतो वै महदंतस्तृतीयमहस्तृतीये ऽहनि तृतीयस्यान्हो रूपं.
घृतेन द्यावापृथिवी अभिवृते इति द्यावापृथिवीयं; घृतश्रिया घृत-
पृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीये ऽहनि तृतीयस्यान्हो रूपं.
अनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवं; रथस्त्रिचक्र इति त्रिव-
त्तृतीये ऽहनि तृतीयस्यान्हो रूपं. परावतो ये दिधिषंत आप्यमिति वै-
श्वदेवमंतो वै परावतोंतस्तृतीयमहस्तृतीये ऽहनि तृतीयस्यान्हो रूपं.
तद् गायमेतेन वै गयः प्लातो विश्वेषां देवानां प्रियं धामोपागच्छत्स
परमं लोकमजयदुप विश्वेषां देवानां प्रियं धाम गच्छति जयति
परमं लोकं य एवं वेद. वैश्वानराय धिषणामृतावृध इत्याग्नि-
मारुतस्य प्रतिपदंतो वै धिषणांतस्तृतीयमहस्तृतीये ऽहनि तृतीय-

स्यान्हो रूपं· धारावरा मरुतो धृष्णवोजस इति मारुतं ; बव्हभि· व्याहत्यमंतो वै बव्हंतस्तृतीयमहस्तृतीये ऽहनि तृतीयस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता. त्वमग्ने प्रथमो अंगिरा ऋषिरिति जातवेदस्यं पुरस्तादुदर्कं तृतीये ऽहनि तृतीयस्या· न्हो रूपं. त्वं त्वमित्युत्तरं त्र्यहमभिवदति संतत्यै संततैस्त्र्यहै· रव्यवछिन्नैर्यंति य एतं विद्वांसो यंति ॥ २ ॥

आप्यंते वै स्तोमा आप्यंते छंदांसि तृतीये ऽहन्येव तदेव तत्र उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येकमक्षरमक्षरमिति त्र्यक्षरं स एवैष उत्तरस्त्र्यहो वागेकं गौरेकं द्यौरेकं· ततो वै वागेव चतुर्थमहर्वहति· तद्यच्चतुर्थमहन्न्यूंखयत्येतदेव तदक्षरमभ्यायच्छंत्य· तद्वर्धयंत्येतत्प्रविभावयिषंति चतुर्थस्यान्ह उदात्त्या. अन्नं वै न्यूंखो यदेलबा अभिगेष्णाश्वरंत्यथान्नाद्यं प्रजायते· तद्यच्चतुर्थ· महन्न्यूंखयन्त्यन्नमेव तत्प्रजनयंत्यन्नाद्यस्य प्रजात्यै· तस्माच्चतुर्थ· महर्जातवद् भवति. चतुरक्षरेण न्यूंखयेदित्याहुश्चतुष्पादा वै पशवः पशूनामवरुध्यै त्र्यक्षरेण न्यूंखयेदित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्या एकाक्षरेण न्यूंखयेदिति ह स्माह लांगलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव संप्रति न्यूंखं न्यूंखयति य एकाक्षरेण न्यूंखयतीति द्व्यक्षरेणैव न्यूंखयेत् प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति· तस्माद् द्व्यक्षरेणैव न्यूंखयेन्मुखतः प्रातरनुवाके न्यूंखयति ; मुखतो वै प्रजा अन्न· मदंति; मुखत एव तदन्नाद्यस्य यजमानं दधाति· मध्यत आज्ये न्यूंखयति; मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यजमानं दधाति. मुखतो मध्यंदिने न्यूंखयति; मुखतो वै प्रजा

अन्नमदंति; मुखत एव तदन्नाद्यस्य यजमानं दधाति. तदुभयतो न्यूंखं परिगृण्हाति सवनाभ्यामन्नाद्यस्य परिगृहीत्यै ॥ ३ ॥

वाग्वै देवता चतुर्थमहर्वहत्येकविंशस्तोमो वैराजं सामानुष्टुप छंदो यथादेवतमेनेन यथास्तोमं यथासामं यथाछंदसं राध्नोति य एवं वेद. यद्वा एति च प्रेति च तच्चतुर्थस्यान्हो रूपं. यत्व्येव प्रथममहस्तदेतत्पुनर्यच्चतुर्थे यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्र- थमे पदे देवता निरुच्यते यदयं लोको ऽभ्युदितो यज्जातवद्यत्स्व- ववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं यद्विछंदा यदून(- तिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्यान्हो रूपमेतानि वै चतुर्थस्यान्हो रूपाणि. अग्निं न स्ववृक्तिभिरिति चतुर्थस्यान्ह आज्यं भवति; वैमदं विरिफितं विरिफितस्य ऋषेश्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपमष्टर्चं पांक्तं; पांक्तो यज्ञः पांक्ताः पशवः पशूना- मवरुध्यै. ता उ दश जगत्यो जगत्प्रातःसवन एष त्र्यहस्तेन चतुर्थस्यान्हो रूपं. ता उ पंचदशानुष्टुभ आनुष्टुभं ह्येतदहस्तेन चतुर्थस्यान्हो रूपं. ता उ विंशति गायत्र्यः पुनः प्रायणीयं ह्येतदहस्तेन चतुर्थस्यान्हो रूपं. तदेतदस्तुतमशस्तमयातयाम- सूक्तं यज्ञ एव साक्षात्तद्यदेतच्चतुर्थस्यान्ह आज्यं भवति. यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयंति संतत्यै संततैस्त्र्यहैरव्यव- छिन्नैर्यंति य एवं विद्वांसो यंति. वायो शुक्रो अयामि ते, वि- हि होत्रा अवीता, वायोः शतं हरीणाम्, इंद्रश्च वायवेषां सोमानाम्, आ चिकितान सुक्रतू, आ नो विश्वाभिरूतिभिस्, त्यमु वो अप्र- हणम्, अप त्यं वृजिनं रिपुम्, अंबितमे नदीतम इत्यानुष्टुभं प्रउगमेति च प्रेति च शुक्रवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. तं त्वा यज्ञेभिरीमह इति मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्य-

मिवैतदहस्तेन चतुर्थस्यान्हो रूपं. इदं वसो सुतमंध, इंद्र नेदीय एदिहि, मैतु ब्रह्मणस्पतिर्, अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वंत्यपः, प्र व इंद्राय बृहत इति प्रथमेनान्हा समान आतानश्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. श्रुधी हवमिंद्र मा रिषण्य इति सूक्तं हववच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. मरुत्वां इंद्र वृषभो रणायेति सूक्तम्; उग्रं सहोदामिह तं हुवेमेति हववच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्राच्यावत. इमं नु मायिनं हुव इति पर्यासो हववांश्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. ता उ गायत्र्यो. गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति. तद्वैतच्छंदो वहति यस्मिन् निविद्धीयते तस्माद् गायत्रीषु निविदं दधाति. पिबा सोममिंद्र मंदतु त्वा, श्रुधी हवं विपिपानस्याद्रेरिति वैराजं पृष्ठं भवति बार्हते ऽहनि चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. यद्वावानेति धाय्याच्युता. त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेन. त्वमिंद्र प्रतूर्तिष्विति सामप्रगाथो, अशस्तिहा जनितेति जातवांश्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ ४ ॥

कुह श्रुत इंद्रः कस्मिन्नद्येति सूक्तं वैमदं विरिफितं विरिफितस्य ऋषेश्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. युध्मस्य ते वृषभस्य स्वराज इति सूक्तम्, उरुं गभीरं जनिषाभ्युग्रमिति जातवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते. त्यमु वः सत्रासाहमिति पर्यासो; विश्वासु गीर्ष्वायतमित्यभ्यायाम्यामिवैतदहस्तेन चतुर्थस्यान्हो रूपं. ता उ गायत्र्यो. गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति

तद्धैतच्छंदो वहति यस्मिन्निविद्धीयते तस्माद् गायत्रीषु निविदं दधाति. विश्वो देवस्य नेतुस्, तत्सवितुर्वरेण्यम्, आ विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हते ऽहनि चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. आ देवो यातु सविता सुरत्न इति सावित्रमेति चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्यावापृथिवीयं प्रेति चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. प्र ऋभुभ्यो दूतमिव वाचमिष्य इत्यार्भवं. प्रेति च वाचमिष्य इति च चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. प्र शुक्रैतु देव मनीषेति वैश्वदेवं. प्रेति च शुक्रवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. ता उ विछंदसः संति द्विपदाः संति चतुष्पदास्तेन चतुर्थस्यान्हो रूपं. वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपद्; इतो जात इति जातवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. क ईं व्यक्ता नरः सनीळा इति मारुतं; नकिर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. ता उ विछंदसः संति द्विपदाः संति चतुष्पदास्तेन चतुर्थस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता. अग्निं नरो दीधितिभिररण्योरिति जातवेदस्यं; हस्तच्युती जनयन्तेति जातवच्चतुर्थे ऽहनि चतुर्थस्यान्हो रूपं. ता उ विछंदसः संति विराजः संति त्रिष्टुभस्तेन चतुर्थस्यान्हो रूपमन्हो रूपं ॥ ५ ॥

इत्यैतरेयब्राह्मणे पंचमपंचिकायां प्रथमो ऽध्यायः ॥ १ ॥

गौर्वै देवता पंचममहर्वहति त्रिणवः स्तोमः शाक्वरं साम पंक्तिश्छंदो यथादेवतमेनेन यथास्तोमं यथासामं यथाछंदसं राध्नोति य एवं वेद. यद्वै नेति न प्रेति यत्स्थितं तत्पंचमस्यान्हो रूपं. यत्स्येव द्वितीयमहस्तदेतत्पुनर्यत्पंचमं यदूर्ध्ववद्यत्प्रतिवद्यदंतर्वद्यद्वृषण्वद् यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदंतरिक्षमभ्युदितं यद्दुग्धवद् य-

दूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूपं यदध्यासवद्विक्षुद्रा इव हि पशवो यज्जागतं जागता हि पशवो; यद्बार्हतं बार्हता हि पशवो यत्पांक्तं पांक्ता हि पशवो; यद्वामं वामं हि पशवो यद्वविष्मत्स्वविर्हि पशवो यद्वपुष्मद्वपुर्हि पशवो यच्छाकरं यत्पांक्तं यत्कुर्वद्यद्द्वितीयस्यान्हो रूपमेतानि वै पंचमस्यान्हो रूपाणि. इममू षु वो अतिथिमुषर्बुधमिति पंचमस्यान्ह आज्यं भवति.जागतमध्यासवत्पशुरूपं पंचमे ऽहनि पंचमस्यान्हो रूपं·आ नो यज्ञं दिविस्पृशम्,आ नो वायो महे तने,रथेन पृथुपाजसा,बहवः सूरचक्षस,इमा उ वां दिविष्टयः,पिबा सुतस्य रसिनो,देवंदेवं वो ऽवसे देवं देवं, बृहदु गायिषे वच इति बार्हतं प्रउगं पंचमे ऽहनि पंचमस्यान्हो रूपं· यत्पांचजन्यया विशेति मरुत्वतीयस्य प्रतिपत्पांचजन्ययेति पंचमे ऽहनि पंचमस्यान्हो रूपम्· इंद्र इत्सोमपा एक,इंद्र नेदीय एदिहि, उत्तिष्ठ ब्रह्मणस्पते, ऽग्निर्नेता,त्वं सोम क्रतुभिः, पिन्वंत्यपो, बृहदिंद्राय गायतेति द्वितीयेनान्हा समान आतानः पंचमे ऽहनि पंचमस्यान्हो रूपम्. अवितासि सुन्वतो वृक्तबर्हिष इति सूक्तं. मद्वत्पांक्तं पंचपदं पंचमे ऽहनि पंचमस्यान्हो रूपं.इत्था हि सोम इन्मद इति सूक्तं मद्वत्पांक्तं पंचपदं पंचमे ऽहनि पंचमस्यान्हो रूपं. इंद्र पिब तुभ्यं सुतो मदायेति सूक्तं मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवंत. मरुत्वां इंद्र मीढ्व इति पर्यासो नेति न प्रेति पंचमे ऽहनि पंचमस्यान्हो रूपं. ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति. तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते तस्माद् गायत्रीषु निविदं दधाति ॥ ६ ॥

महानाम्नीष्वत्र स्तुवते शाकरेण साम्ना राथंतरे ऽहनि पंचमे ऽहनि पंचमस्यान्हो रूपम्· इंद्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्यो ऽथो इमे वै लोका महानाम्न्य इमे महांत इमान्वै लोकान्

प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किं च यदिमान् लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किं च तच्छक्वर्यो ऽभवंस्तच्छक्वरीणां शक्वरीत्वं. ता ऊर्ध्वाः सीम्नो ऽभ्यसृजत यदूर्ध्वाः सीम्नो ऽभ्यसृजत तत्सिमा अभवंस्तत्सीमानां सिमात्वं. स्वादोरित्था विषूवत, उप नो हरिभिः सुतम्, इंद्रं विश्वा अवीवृधन्नित्यनुरूपो वृषण्वान् पृश्निमान्महद्वान्वृधन्वान्पंचमे ऽहनि पंचमस्याह्नो रूपं. यद्वावानेति धाय्याच्युता. अभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेन. मो षु त्वा वाघतश्चनेति सामप्रगाथो ऽध्यासवान् पशुरूपं पंचमे ऽहनि पंचमस्याह्नो रूपं. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ ७ ॥

प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति सूक्तं पांक्तं पंचपदं पंचमे ऽहनि पंचमस्याह्नो रूपम्; इंद्रो मदाय वावृध इति सूक्तं मद्वत्पांक्तं पंचपदं पंचमे ऽहनि पंचमस्याह्नो रूपं. सत्रा मदासस्तव विश्वजन्या इति सूक्तं मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते. तमिंद्रं वाजयामसीति पर्यासः; स वृषा वृषभो भुवदिति पशुरूपं पंचमे ऽहनि पंचमस्याह्नो रूपं. ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति. तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते. तस्माद् गायत्रीषु निविदं दधाति. तत्सवितुर्वृणीमहे, अद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरे ऽहनि पंचमे ऽहनि पंचमस्याह्नो रूपम्. उदु ष्य देवः सविता दमूना इति सावित्रम्; आ दाशुषे सुवति भूरि वाममिति वामं पशुरूपं पंचमे ऽहनि पंचमस्याह्नो रूपं. मही द्यावापृथिवी इह ज्येष्ठे इति द्यावापृथिवीयं; रुवत्धोक्षेति पशुरूपं पंचमे ऽहनि पंचमस्याह्नो रूपम्. ऋभुर्विभ्वा वाज इंद्रो नो अच्छेत्यार्भवं. वाजो वै पशवः पशुरूपं पंचमे ऽहनि पंचमस्याह्नो रूपं. स्तुषे जनं सुव्रतं नव्यसाभि-

रिति वैश्वदेवमध्यासवत्तशुरूपं पंचमे ऽहनि पंचमस्यान्हो रूपं. हविष्पांतमजरं स्वर्विदीत्याग्निमारुतस्य प्रतिपत्तविष्मत्पंचमे ऽहनि पंचमस्यान्हो रूपं. वपुर्नु तच्चिकितुषे चिदस्त्विति मारुतं वपुष्मत्पंचमे ऽहनि पंचमस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता. अग्निर्होता गृहपतिः स राजेति जातवेदस्यमध्यासवत्तशुरूपं पंचमे ऽहनि पंचमस्यान्हो रूपं ॥ ८ ॥

देवक्षेत्रं वा एतद्यत्षष्ठमहर्देवक्षेत्रं वा एत आगच्छंति ये षष्ठमहरागच्छति न वै देवा अन्योन्यस्य गृहे वसंति. नर्तुर्ऋतोर्गृहे वसतीत्याहुस्तद्यथा यथमृत्विज ऋतुयाजान् यजंत्यसंप्रदायं तद्यथर्तूनृत्कल्पयंति यथायथं जनतास्तदाहुर्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्यं. वाग्वा ऋतुप्रैषा आप्यते वै वाक् षष्ठे ऽहनीति यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्तां श्रांतामृच्छणवर्हीं वहराविणीमृच्छेयुर्यद्वेभिर्न प्रेष्येयुर्यद्वेभिर्न वषट्कुर्युरच्युताद्यज्ञस्य च्यवेरन्यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा ईयुस्तस्मादृग्मेभ्य एवाधि प्रेषितव्यमृग्मेभ्यो ऽधि वषट्कृत्यं. तं न वाचमाप्तां श्रांतां ऋच्छणवर्हीं वहराविणीमृछंति नाच्युताद्यज्ञस्य च्यवंते न यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मायंति ॥ ९ ॥

पारुच्छेपीरुप दधाति पूर्वयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानां. रोहितं वै नामैतच्छंदो यत्पारुच्छेपमेतेन वा इंद्रः सप्त स्वर्गाल्लोकानरोहद्रोहति सप्त स्वर्गान् लोकान् य एवं वेद. तदाहुर्यत्पंचपदा एव पंचमस्यान्हो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदा षष्ठे ऽहञ्छस्यंत इति षड्भिरेव पदैः षष्ठमहराप्नुवंत्यपाछिद्यैवैतदहर्यत्सप्तमं तदेव सप्तमेन पदेनाभ्यारभ्य वसंति. वाचमेव तत्पुनरुपयंति संतत्यै संततिस्त्र्यहैरव्यवछिन्नैर्यंति य एवं विद्वांसो यंति ॥ १० ॥

देवासुरा वा एषु लोकेषु समयतंत. ते वै देवाः षष्ठेनैवान्हैभ्यो लोकेभ्यो ऽसुरान् प्राणुदंत. तेषां यान्यंतर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्रं प्रौप्यंत. त एतेनैव छंदसा ऽनुहायांतर्हस्तीनानि वसून्याददत. तद्यदेतत्पदं पुनः पदं स एवांकुश आसंजनाय. आ द्विषतो वसु दत्ते निरेनमेभ्यो सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ॥ ११ ॥

द्यौर्वै देवता षष्ठमहर्वहति त्रयस्त्रिंशः स्तोमो रैवतं सामातिछंदाश्छदो यथादेवतमेनेन यथास्तोमं यथासाम यथाछंदसं राध्नोति य एवं वेद. यद्वै समानोदर्कं तत्षष्ठस्यान्हो रूपं यत्ह्येव तृतीयमहस्तदेतत्पुनर्यत्षष्ठं. यदश्ववद्यदंतवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदंतरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोको ऽभ्युदितो यत्पारुछेपं यत्सप्तपदं यन्नाराशंसं यन्नाभानेदिष्ठं यद्रैवतं यदतिछंदा यत्कृतं यत् तृतीयस्यान्हो रूपमेतानि वै षष्ठस्यान्हो रूपाणि. अयं जायत मनुषो धरीमणीति षष्ठस्यान्ह आज्यं भवति. पारुछेपमतिछंदाः सप्तपदं षष्ठे ऽहनि षष्ठस्यान्हो रूपं. स्तीर्णं बर्हिरुप नो याहि वीतय, आ वां रथो नियुत्वान्वक्षदवसे, सुषुमा यातमद्रिभिर, युवां स्तोमेभिर्देवयंतो अश्विना, अवर्मह इंद्र वृषन्निंद्रा, अस्तु श्रौषळ् ओषुणो अग्ने शृणुहि त्वामीळितो, ये देवासो दिव्येकादश स्थ, इयमददाद्रभसमृणच्युतमिति प्रउगं पारुछेपमतिछंदाः सप्तपदं षष्ठे ऽहनि षष्ठस्यान्हो रूपं. स पूर्व्यो महानामिति मरुत्वतीयस्य प्रतिपदंतो वै महदंतः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. त्रय इंद्रस्य सोम, इंद्र नेदीय एदिहि, प्र नूनं ब्राह्मणस्पतिर्, अग्निर्नेता, त्वं सोम क्रतुभिः, पिन्वंत्यपो, नकिः सुदासो रथमिति तृतीयेनान्हा समान आतानः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. यं त्वं रथमिंद्र मेधसातय इति सूक्तं पारुछेपमतिछंदाः सप्तपदं षष्ठे

ऽहनि षष्ठस्यान्हो रूपं. स यो वृषा वृष्ण्येभिः समोका इति सूक्तं समानोदर्कं षष्ठे ऽहनि षष्ठस्यान्हो रूपं. इंद्र मरुत्व इह पाहि सोममिति सूक्तं; तेभिः साकं पिबतु वृत्रखाद इत्यंतो वै खादोंतः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते. अयं ह येन वा इदमिति पर्यासः स्वर्मरुत्वता जितमित्यंतो वै जितमंतः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति. तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते तस्मात् गायत्रीषु निविदं दधाति. रेवतीर्नः सधमादे, रेवाँ इद्रेवतस्तोतेति रैवतं पृष्ठं भवति बार्हते ऽहनि षष्ठे ऽहनि षष्ठस्यान्हो रूपं. यद्वावानेति धाय्याच्युता. त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति. बार्हतं ह्येतदहरायतनेन. इंद्रमिद्देवतातय इति सामप्रगाथो निनृत्तवान्षष्ठे ऽहनि षष्ठस्यान्हो रूपं. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यो ऽच्युतः ॥ १२ ॥

ऐंद्र याह्युप नः परावत इति सूक्तं पारुच्छेपमतिछंदाः सप्तपदं षष्ठे ऽहनि षष्ठस्यान्हो रूपं. प्र घा न्वस्य महतो महानीति सूक्तं समानोदर्कं षष्ठे ऽहनि षष्ठस्यान्हो रूपम्. अभूरेको रयिपते रयीणामिति सूक्तं; रथमातिष्ठ तुविनृम्ण भीममित्यंतो वै स्थितमंतः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते. उप नो हरिभिः सुतमिति पर्यासः समानोदर्कः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंति. तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते. तस्माद्गायत्रीषु निविदं दधाति. अभि त्यं देवं सवितारमोण्योरिति वैश्वदेवस्य प्रतिपदतिछंदाः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. तत्सवितु

रेण्यं,दोषो अगादित्यनुचरोंतो वै गतमंतःषष्ठमहः षष्ठे ऽहनि षष्ठ-
स्यान्हो रूपम्. उदु ष्य देवः सविता सवायेति सावित्रं;शश्वत्तमं तदप
न्हिरस्थादित्यंतो वै स्थितमंतः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो
रूपं. कतरा पूर्वा कतरापरायोरिति द्यावापृथिवीयं समानोदर्कं षष्ठे
ऽहनि षष्ठस्यान्हो रूपं. किमुश्रेष्ठः किं यविष्ठो न आजगन्, उप नो
वाजा अध्वरमृभुक्षा इत्यार्भवं नाराशंसं त्रिवत्षष्ठे ऽहनि षष्ठस्यान्हो
रूपम्. इदमित्था रौद्रं गूर्तवचा, ये यज्ञेन दक्षिणयासमक्ता इति
वैश्वदेवं ॥१३ ॥

नाभानेदिष्ठं शंसति. नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं
भ्रातरो निरभजंत्सो ऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावम-
ववदितारमित्यब्रुवंस्तस्मात्थाप्येतर्हि पितरं पुत्रा निष्ठावो ऽववदितेत्ये-
वाचक्षते. स पितरमेत्याब्रवीत् त्वां ह वाव मह्यं तताभाक्षुरिति तं
पिताब्रवीन्मा पुत्रक तदादृथा अंगिरसो वा इमे स्वर्गाय लोकाय सत्र-
मासते. ते षष्ठं षष्ठमेवाहरागत्य मुह्यंति. तानेते सूक्ते षष्ठे ऽहनि
शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यंतो दास्यंतीति तथेति
तानुपैत्प्रतिगृभ्णीत मानवं सुमेधस इति तमब्रुवन् किंकामो वदसी-
तीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्वा एतत्सहस्रं सत्रप-
रिवेषणं तन्मे स्वर्यंतो दत्तेति तथेति तानेते सूक्ते षष्ठे ऽहन्यशंसयत्.
ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकं. तद्यदेते सूक्ते षष्ठे ऽहनि
शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै. तं स्वर्यंतो ऽब्रुवन्ने-
तत्ते ब्राह्मण सहस्रमिति तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत
उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमिति सो ऽब्रवीन्मह्यं वा
इदमदुरिति तमब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति स पितरमैत्तं
पिताब्रवीन्ननु ते पुत्रकादुरित्यदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः

कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति तं पिता ब्रवीत्तस्यैव पुत्रक तत्तुभ्यं स दास्यतीति स पुनरेत्याब्रवीत्तव ह वाव किल भगव इदमिति मे पिताहेति सो ऽब्रवीत्तदह तुभ्यमेव ददामि य एव सत्यमवादीरिति तस्मादेवं विदुषा सत्यमेव वदितव्यं. स एष सहस्रसनिर्मंत्रो यन्नाभानेदिष्ठं. उपैनं सहस्रं नमति प्र षष्ठेनान्हा स्वर्गं लोकं जानाति य एवं वेद ॥ १४ ॥

तान्येतानि सहचराणीत्याचक्षते· नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सहैव शंसेद्यदेषामंतरियात्तद्यजमानस्यांतरियाद्यदि नाभानेदिष्ठं रेतो ऽस्यांतरियाद्यदि वालखिल्याः प्राणानस्यांतरियाद्यदि वृषाकपिमात्मानमस्यांतरियाद्यद्येवयामरुतं प्रतिष्ठाया एनं च्यावयेद्दैव्यै च मानुष्यै च. नाभानेदिष्ठेनैव रेतोऽसिंचत्तद्वालखिल्याभिर्व्यकरोत्. सुकीर्तिना काक्षीवतेन योनिं व्यहापयदुरौ यथा तव शर्मन्मदेमेति· तस्मा ज्यायान्स गर्भः कनीयांसं संतं योनिं न हिनस्ति ब्रम्हणा हि स क्लृप्त एवयामरुतेनैं करोति तेनेदं सर्वमेतवै कृतमेति यदिदं किंच. अहश्च कृष्णमहरर्जुनं चेत्याभिमारुतस्य प्रतिपदहश्चाहश्चेति पुनरावृत्तं पुनर्निनृत्तं षष्ठे ऽहनि षष्ठस्यान्हो रूपं. मध्वो वो नाम मारुतं यजत्रा इति मारुतं बव्हभिव्याहृत्यमेतो वै बव्हं तः षष्ठमहः षष्ठे ऽहनि षष्ठस्यान्हो रूपं. जातवेदसे सुनवाम सोममिति जातवेदस्याच्युता. स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कं षष्ठे ऽहनि षष्ठस्यान्हो रूपं धारयं धारयन्निति शंसति प्रस्रंसाद्वा अंतस्य बिभाय तद्यथा पुनराग्रंथं पुनर्निग्रंथमंतं बध्नीयान्मयूखं वाततो धारणाय निहन्यात्तादृक्तद्यत्धारयं धारयन्निति शंसति संतत्यै संततस्यहैरव्यव·

छिन्नैर्यंति य एवं विद्वांसो यंति ॥ १५ ॥ इत्यैतरेयब्राह्मणे पंचमपंचिकायां द्वितीयो ऽध्यायः ॥ २ ॥

यद्वा एति च प्रेति च तत्सप्तमस्यान्हो रूपं. यत्ध्येव प्रथममहस्तदेवैतत्पुनर्यत्सप्तमं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोको ऽभ्युदितो यज्जातवद्यदनिरुक्तं यत्करिष्यद्यत्प्रथमस्यान्हो रूपमेतानि वै सप्तमस्यान्हो रूपाणि· समुद्रादूर्मिर्मधुमा ऽउदारदिति सप्तमस्यान्ह आज्यं भवत्यनिरुक्तं सप्तमे ऽहनि सप्तमस्यान्हो रूपं. वाग्वै समुद्रो न वै वाक् क्षीयते न समुद्रः क्षीयते तद्यदेतत्सप्तमस्यान्ह आज्यं भवति यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयंति संतत्यै· संततैस्त्र्यहैरव्यवछिन्नैर्यंति य एवं विद्वांसो यंत्याप्यंते वै स्तोमा आप्यंते छंदांसि षष्ठे ऽहनि तद्यथैवाद आज्येनावदानानि पुनः प्रत्यभिघारयंत्ययातयामताया एवमेवैतत्स्तोमा ऽश्च छंदांसि च पुनः प्रत्युपयंत्ययातयामतायै यदेतत्सप्तमस्यान्ह आज्यं भवति· तदु त्रैष्टुभं त्रिष्टुप् प्रातःसवन एष त्र्यहः. आ वायो भूष शुचिपा उप नः, प्रयाभिर्यासि दाश्वांसमछ, आ नो नियुद्भिः, शतिनीभिरध्वरं, प्र सोता जिरो अध्वरेष्वस्थात्, ये वायव इंद्रमादनासो, या वां शतं नियुतो याः सहस्रं, प्र यद्वां मित्रावरुणास्पर्धन्, आ गोमतानासत्या रथेन, आ नो देव शवसा याहि शुष्मिन्, प्र वो यज्ञेषु देवयंतो अर्चन्, प्रक्षोदसा धायसा सस्र एषेति प्रउगमेति च प्रेति च सप्तमे ऽहनि सप्तमस्यान्हो रूपं. तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः. आ त्वा रथं यथोतय, इदं वसो सुतमंध, इंद्र नेदीय एदिहि, प्रैतु ब्रम्हणस्पतिर्, अग्निर्नेता, त्वं सोम क्रतुभिः पिन्वंत्यपः, प्र व इंद्राय ब्रृहत इति प्रथमेनान्हा समान आतनः सप्तमे ऽहनि सप्तमस्यान्हो रूपं. कया शुभा सवयसः सनीळा इति

द्यस्यावरुध्या. उदु ब्रह्माण्यैरत श्रवस्येति ब्राह्मणाच्छंसी
ण्वत्समृद्धं सूक्तमहरहः शंसति. तदेतत्सूक्तं स्वग
न वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषयस्तथैवै
माना एतेन सूक्तेन स्वर्गं लोकं जयंति. तदु वासिष्ठमेतेन वै व
इंद्रस्य प्रियं धामोपागच्छत्स परमं लोकमजयदुपेंद्रस्य प्रिय
म गच्छति जयति परमं लोकं य एवं वेद. तद्वै षळृचं
ऋतव ऋतूनामाप्त्यै तदुपरिष्टात्संपातानां शंसत्याप्तयैव तत्स्वर्गे
यजमाना अस्मि लोके प्रतितिष्ठंति. अभि तष्टेव दीधया म
मित्यच्छावाको ऽहरहः शंसति. अभिवत्तत्यै रूपम्. अभि प्रि
मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव त
मर्मृशंतो यंत्यभ्यारभमाणाः. परो वा अस्माल्लोकात्स्वर्गो लोक
व तदभिवदति. कवीँरिच्छामि संदृशे सुमेधा इति ये वै तेन ऋ
पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति. तदु वैश्वामित्रं. वि
ह वै मित्रं विश्वामित्र आस; विश्वं हास्मै मित्रं भवति य
वेद. तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रज
राप्त्यै. सकृदिंद्रं निराह तेनैंद्राद्रूपान्न प्रच्यवते. तद्वै दशर्चं; दश
विराळन्नं विराळन्नाद्यस्यावरुध्यै यदेव दशर्चा१. दश वै प्र
प्राणानेव तदाप्नुवंति प्राणान्त्संदधते. तदुपरिष्टात्संपातानां श
सत्याप्त्यैव तत्स्वर्गे लोके यजमाना अस्मिन् लोके प्र
तिष्ठंति ॥ २० ॥

कस्तमिंद्र त्वा वसुं, कन्नव्यो अतसीनां, कदू न्वस्या कृता
कद्वंतः प्रगाथा आरंभणीया अहरहः शस्यंते. को वै प्रजाप
प्रजापतेराप्त्यै यदेव कद्वंतास्३; अन्नं वै कमन्नाद्यस्यावरुध्यै. य
कद्वंताः अहरहर्वा एते शांतान्यहीनसूक्तान्युपयुंजाना यंति त

द्भिः प्रगाथैः शमयंति तान्येभ्यः शांतानि कं भवंति. तान्येनांच्छां-
ानि स्वर्गं लोकमभिवहंति. त्रिष्टुभः सूक्तप्रतिपदः शंसेयुस्ता
के पुरस्तात्प्रगाथानां शंसंति· धाय्या इति वदंतस्तत्तथा न
ुर्यात्क्षत्रं वै होता विशो होत्राशंसिनः क्षत्रायैव तद्विशं प्रत्यु·
ामिनीं कुर्युः पापवस्यसं· त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव
वद्यात्तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवंते ये संवत्सरं द्वादशाहं
ासते तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेवमेवैता
स्त्रिष्टुभः समारोहंति. न ह वा एतच्छंदो गमयित्वा स्वर्गं लोक-
मुपावर्तते वीर्यवत्तमं हि; ताण्यो न व्याव्हयति समानं हि
छंदो;ऽथो नेद्धाय्याः करवाणीति यदेनाः शंसंति. प्रज्ञाताभिः
सूक्तप्रतिपद्भिः सूक्तानि समारोहामेति यदेवैनाः शंसंतींद्रमेवै
ताभिर्निव्हयंते यथ ऋषभं वाशितायै यद्वेवैनाः शंसंत्यही·
नस्य संतत्या अहीनमेव तत्संतन्वंति ॥ २१ ॥

अप प्राच इंद्र विश्वां अमित्रानिति मैत्रावरुणः पुरस्तात्सू-
क्तानामहरहः · शंसति· अपापाचो अभिभूते नुदस्व अपोदीचो
अप शूराधराच उरौ यथा तव शर्मन्मदेमेत्यभयस्य रूपमभयमिव
हि यन्निच्छति· ब्रम्हणा ते ब्रम्हयुजा युनज्मीति ब्राम्हणाच्छंस्य-
हरहः शंसति.युनज्मीति युक्तवती युक्त इव ह्यहीनो ऽहीनस्य रूपम्.
उरुं नो लोकमनुनेषि विद्वानित्यच्छावाको ऽहरहः शंसत्यनुनेषीत्येतीव
ह्यहीनो ऽहीनस्य रूपं; नेषीति सत्रायणरूपं· ता वा एता अहरहः
शस्यंते समानीभिः परिदध्युर्;ओकःसारी हैषामिंद्रो यज्ञं भवति·२३
यथ ऋषभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठमेव हैषामिंद्रो
यज्ञमेव गच्छति. न शुनं हुवीययाहीनस्य परिदध्यात्क्षत्रियो
ह राष्ट्राच्च्यवते यो हैव परो भवति तमभिव्हयति ॥ २२ ॥

अथातो ऽहीनस्य युक्तिश्च विमुक्तिश्च; व्यंतरिक्षमतिरदित्य-हीनं युंक्त; एवेदिंद्रमिति विमुंचति. आहं सरस्वतीवतोर्, नूनं सा त इत्यहीनं युंक्ते; ते स्याम देव वरुण, नू ष्टुत इति विमुंचत्येष ह वा अहीनं. तंतुमर्हति य एनं योक्तुं च विमोक्तुं च वेद तद्यच्चतुर्विंशे ऽहन् युज्यंते सा युक्तिरथ यत्पुरस्तादुदयनीयस्याति-रात्रस्य विमुच्यंते सा विमुक्तिस्तद्यच्चतुर्विंशे ऽहन्नैकाहिकाभिः परिदध्युरत्राहैव यज्ञं संस्थापयेयुर्नाहीनकर्म कुर्युरथ यदहीन परिधानीयाभिः परिदध्यु र्यथा श्रांता विमुच्यमान उत्कृत्येतैवं यजमाना उत्कृत्येरन्नुभयीभिः परिदध्युर्तद्यथा दीर्घाध्व उपविमोकं यायात्तादृक्तत्संततो हैषां यज्ञो भवतीं१ ३व्युमुंचंत. एकां द्वे नद्वयोः सवनयोः स्तोममतिशंसेद्दीर्घारण्यानि ह वै भवंति यत्र बव्हीभिः स्तोमो ऽतिशस्यते ऽपरिमिताभिस्तृतीयसवने; ऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्तयै संततो हास्याभ्यारब्धो विस्रस्तो ऽहीनो भवति य एवं विद्वानहीनं तनुते ॥ २३ ॥

देवा वै वले गाः पर्यपश्यंस्ता यज्ञेनैवेप्संरताः षष्ठेनाऽहाप्नुवं स्ते प्रातःसवने नभाकेन वलमनभयंस्तं यदनभया३न् अश्रथयन्नेवैनं तत्त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचः कूटेनैकपदया वलं विरुज्य गा उदाजंस्तथैवैतद्यजमानाः प्रातःसवने नभाकेन वलं नभयंति तं यं नभयंती१ ३श्रथयंत्येवैनं तत्तस्माद्धोत्रकाः प्रातःसवने नाभाकांस्तृचांच्छंसंति. यः ककुभो निधारय इति मैत्रावरुणः; पूर्वीष्ट इंद्रोप मातय इति ब्राम्हणाच्छंसी; ता हि मध्यं भराणामित्यछावाकस्त उ तृतीयसवने वज्रेण वालखिल्या-भिर्वाचः कूटेनैकपदया वलं विरुज्य गा आप्नुवंति. पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयं स-

पच्छो विहरन्प्रगाथे प्रगाथ एवैकपदां दध्यात्स वाचः कूटस्ता एताः पंचैकपदाश्चतस्त्रो दशमादन्ह एका महाव्रतादथाष्टाक्षराणि माहानामनानि पदानि तेषां यावद्भिः संपद्येत तावंति शंसेन्नेतराण्याद्रियेतार्धर्चशो विहरंस्ताश्चैवैकपदाः शंसेत्तानि चैवाष्टाक्षराणि माहानामनानि पदान्यथ ऋक्शो विहरंस्ताश्चैवैकपदाः शंसेत्तानि चैवाष्टाक्षराणि माहानामनानि पदानि. स यत्प्रथमं षड् वालखिल्यानां सूक्तानि विहरति प्राणंच तद्वाचं च विहरति. यद् द्वितीयं चक्षुश्च तन्मनश्च विहरति. यत्तृतीयं श्रोत्रं च तदात्मानं च विहरति. तदुपाप्तो विहारे काम उपाप्तो वज्रे वालखिल्यासूपाप्तो वाचः कूट एकपदायामुपाप्तः प्राणकृत्स्यामविहृतानेव चतुर्थे प्रगाथांच्छंसति. पशवो वै प्रगाथाः पशूनामवरुध्यै नात्रैकपदां व्यवदध्याद्यदत्रैकपदां व्यवदध्याद्वाचः कूटेन यजमानात्पशून्निर्हण्याद्य एनं तत्र ब्रूयाद्वाचः कूटेन यजमानात्पशून्निरवधीरपशुमेनमकरिति शश्वत्तथा स्यात्तस्मात्तत्रैकपदान्न व्यवदध्याद् द्वयेवोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारस्तदेतत्सौबलाय सर्पिर्वात्सिः शशंस. स होवाच भूयिष्ठानहं यजमाने पशून्पर्यग्रहैषमकनिष्ठा उ मा मा गमिष्यंतीति तस्मै ह यथा महभ्य ऋत्विग्भ्य एवं निनाय तदेतत्पशव्यंच स्वर्ग्यंच शस्त्रं तस्मादेतच्छंसति ॥ २४ ॥

दूरोहणं रोहति तस्योक्तं ब्राम्हणमैंद्रे पशुकामस्य रोहेदैंद्रा वै पशवस् तज्जागतं स्याज्जागता वै पशवः तन्महासूक्तं स्याद्भूयिष्ठे ष्वेव तत्पशुषु यजमानं प्रतिष्ठापयति. बरौ रोहेत्तन्महासूक्तं च जागतं. ऐंद्रावरुणे प्रतिष्ठाकामस्य रोहेदेतदेवता वा एषा होत्रैतत्प्रतिष्ठा यदैंद्रावरुणा तदेनत्स्वायामेव प्रतिष्ठायामंततः

प्रतिष्ठापयति यदैंद्रावरुणा ३इ. एषा ह वा अत्र निविन्निविदा वै कामा आप्यंते स यथैंद्रावरुणे रोहेत्सौपर्णे रोहेत्तदुपाप्त ऐंद्रावरुणे काम उपाप्तः सौपर्णे ॥ २५ ॥

तदाहुः संशंसेत् षष्ठे ऽहा३न् न संशंसे३त् इति संशंसेदित्याहुः कथमन्येष्वहस्सु संशंसति कथमत्र न संशंसेदित्यथो खल्वाहुर्नैव संशंसेत्स्वर्गो वै लोकः षष्ठमहरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसती३ तत्स्वर्गस्य लोकस्य रूपं. तस्मान्न संशंसेद्यदेव न संशंसती३. आत्मा वै स्तोत्रियः प्राणा वालखिल्या. स यत्संशंसेदेताभ्यां देवताभ्यां यजमानस्य प्राणान्वीयाद्य एनं तत्र ब्रूयादेताभ्यां देवताभ्यां यजमानस्य प्राणान्व्यगात्प्राण एनं हास्यतीति शश्वत्तथा स्यात्तस्मान्न संशंसेत्स यदीक्षेताशंसिषं वालखिल्या ऽइ तत्पुरस्ताद्दूरोहणस्य संशंसानीति नो एव तस्याशामियात्तं यदि दर्प एव विंदेदुपरिष्टाद्दूरोहणस्यापि बहूनि शतानि शंसेद्यस्यो तत्कामाय तथा कुर्यादत्रैव तदुपाप्तमैंद्रो वालखिल्यास्तासां द्वादशाक्षराणि पदानि तत्र स काम उपाप्तो य ऐंद्रे जागते ऽथैदमैंद्रावरुणं सूक्तमैंद्रावरुणी परिधानीया तस्मान्न संशंसेत्तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं· विहृता वालखिल्याः शस्यंते विहृतास्तोत्रा३ऽ अविहृता३ऽ इति विहृतमिति ब्रूयादष्टाक्षरेण द्वादशाक्षरमिति. तदाहुर्यथा वाव शस्त्रमेवं याज्या तिस्रो देवताः शस्यंते. अग्निरिंद्रो वरुण इत्यथैंद्रावरुण्या यजति. कथमग्निरनंतरित इति यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं. त्वमग्ने वरुणो जायसे यदि

तद्यदैंद्रावरुण्या यजति. तेनाग्निरनंतरितो ऽनंतरितः ॥ २६ ॥

इत्यैतरेयब्राह्मणे षष्ठपंचिकायां चतुर्थो ऽध्यायः ॥ ४ ॥

शिल्पानि शंसंति. देवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते. हस्तीकंसो वासो हिरण्यमश्वतरीरथः शिल्पं शिल्पं हास्मिन्नधिगम्यते य एवं वेद यदेव शिल्पानी३. आत्मसंस्कृतिर्वाव शिल्पानि छंदोमयं वा एतैर्यजमान आत्मानं संस्कुरुते नाभानेदिष्ठं शंसति. रेतो वै नाभानेदिष्ठो रेतस्तत्सिंचति तमनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहा योन्यां सिच्यते. स रेतोमिश्रो भवति क्ष्मया रेतः संजग्मानो निषिंचदिति रेतः समृध्या एव तं स नाराशंसं शंसति. प्रजा वै नरो वाक् शंसः प्रजास्वेव तद्वाचं दधाति. तस्मादिमाः प्रजा वदंत्यो जायंते. तं हैके पुरस्ताच्छंसंति पुरस्तादायतना वागिति वदंत उपरिष्टादेक उपरिष्टादायतना वागिति वदंतो मध्य एव शंसेन्मध्यायतना वा इयं वागुपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीव वा इयं वाक्तं होता रेतो भूतं सिक्त्वा मैत्रावरुणाय संप्रयच्छत्येतस्य त्वं प्राणान्कल्पयेति ॥ २७ ॥

वालखिल्याः शंसति. प्राणा वै वालखिल्याः प्राणानेवास्य तत्कल्पयति. ता विहृताः शंसति. विहृता वा इमे प्राणाः प्राणेनापानो ऽपानेन व्यानः. स पच्छःप्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये स यत्प्रथमे सूक्ते विहरति प्राणं च तद्वाचं च विहरति. यद् द्वितीये चक्षुश्च तन्मनश्च विहरति. यत्तृतीये श्रोत्रं च तदात्मानं च विहरति. ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरंति. तदुपाप्तो विहारे कामो नेत्तु प्रगाथाः कल्पंते. ऽतिमर्शमेव विहरेत्तथा वै प्रगाथाः कल्पंते. प्रगाथा वै वाल-

खिल्यास्तस्मादतिमर्शमेव विहरेद्यदेवातिमर्शा३. आत्मा वै बृहती प्राणाः सतोबृहती. स बृहतीमशंसीत्स आत्मा ऽथ सतोबृहतीं ते प्राणा अथ बृहतीमथ सतोबृहतीं तदात्मानं प्राणैः परिबृहन्नेति तस्मादतिमर्शमेव विहरेद्यदेवातिमर्शा३ आत्मा वै बृहती पशवः सतोबृहती स बृहतीमशंसीत्स आत्माथ सतोबृहतीं ते पशवो ऽथ बृहतीमथ सतोबृहतीं तदात्मानं पशुभिः परिबृहन्नेति तस्मादतिमर्शमेव विहरेद्द्वयेवोत्तमे सूक्ते पर्यस्यति. स एव तयोर्विहारस्तस्य मैत्रावरुणः प्राणान्कल्पयित्वा ब्राह्मणाच्छंसिने संप्रयच्छत्येतं त्वं प्रजनयेति. ॥ २८ ॥

सुकीर्तिं शंसति. देवयोनिर्वै सुकीर्तिस्तद्यज्ञाद्देवयोन्यै यजमानं प्रजनयति. वृषाकपिं शंसत्यात्मा वै वृषाकपिरात्मानमेवास्य तत्कल्पयति. तन्न्यूंखयत्यन्नं वै न्यूंखस्तदस्मै जाताय ऽन्नाद्यं प्रतिदधाति यथा कुमाराय स्तनं स पांक्तो भवति. पांक्तो ऽयं पुरुषः पंचधा विहितो लोमानि त्वङ् मांसमस्थिमज्जा. स यावानेव पुरुषस्तावंतं यजमानं संस्करोति. ब्राह्मणाच्छंसी जनयित्वा ऽछावाकाय संप्रयच्छत्येतस्य त्वं प्रतिष्ठां कल्पयेति ॥ २९ ॥

एवयामरुतं शंसति. प्रतिष्ठा वा एवयामरुत्प्रतिष्ठामेवास्य तत्कल्पयति. तन्न्यूंखयत्यन्नं वै न्यूंखो ऽन्नाद्यमेवास्मिंस्तद्दधाति. स जागतो वा ऽतिजागतो वा सर्वं वा इदं जागतं वा ऽतिजागतं वा. स उ मारुत आपो वै मारुत आपो ऽन्नमभिपूर्यमेवास्मिंस्तदन्नाद्यं दधाति. तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं. तानि स ह वा शंसेत्स ह वा न शंसेद्यदेनानि नाना शंसेद्यथा पुरुषं वा रेतो वा विछि-

धात्तादृक्तत्तस्मादेनानि स ह वा शंसेत्स ह वा न शंसेत्स ह बुलिल आश्वतर आश्विर्वैश्वजितो होता सन्नीक्षां चक्र एषां वा एषां शिल्पानां. विश्वजिति सांवत्सरिके द्वे मध्यंदिनमभि-प्रत्येतोर्हैताहमित्थमेवयामरुतं शंसयानीति तद्ध तथा शंसयां चकार. तद्ध तथा शस्यमाने गौश्ल आजगाम. स होवाच होत: कथा ते शस्त्रं विचक्रं प्लवत इति? किं ह्यभूदित्येवया-मरुदयमुत्तरत: शस्यत इति! स होवाचेंद्रो वै मध्यंदिन: कथेंद्रं मध्यंदिनान्निनीषसीति नेंद्रं मध्यंदिनान्निनीषामीति होवाच छंदस्त्विदममध्यंदिनसाच्ययं जागतो वाऽतिजागतो वा. सर्वं वा इदं जागतं वाऽतिजागतं वा. स उ मारुतो मैत्र शंसिष्टेति स होवाचारमा छावाकेत्यथ हास्मिन्ननुशासनमीषे स होवाचेंद्रमेव विष्णुं न्यंगं शंसत्वथ त्वमेतं होतरुपरिष्टाद्रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्य स्याथा इति तद्ध तथा शंसयां चकार. तदिदमप्येतर्हि तथैव शस्यते ॥ ३० ॥

तदाहुर्यदास्मिन् विश्वजित्यतिरात्र एवं षष्ठेऽहनि कल्पते यज्ञ: कल्पते यजमानस्य प्रजाति: कथमत्राशस्त एव नाभानेदिष्ठो भवत्यथ मैत्रावरुणो वालखिल्या: शंसति, ते प्राणा रेतो वा अग्रे थ प्राणा, एवं ब्राम्हणाच्छंस्यशस्त एव नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति. स आत्मा रेतो वा अग्रेऽथात्मा. कथमत्र यज-मानस्य प्रजाति: कथं प्राणा अविक्लृप्ता भवंतीति? यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वंति. स यथा गर्भो योन्यामं-तरेवं संभवंछेते. न वै सकृदेवाग्रे सर्व: संभवत्येकैकं वा अंगं संभवत: संभवतीति सर्वाणि चेत्समाने ऽहन् क्रियेरन्कल्पत एव यज्ञ: कल्पते यजमानस्य प्रजातिरथैत होतैवयामरुतं तृतीयसवने

शंसति तथा ऽस्य प्रतिष्ठा तस्यामेवैनं तदंततः प्रतिष्ठापयति ॥ ३१ ॥

छंदसां वै षष्ठेनाऽन्हाप्तानां रसो ऽत्यनेदत्स प्रजापतिरबिभेत्पराङ्यं छंदसां रसो लोकानत्येष्यतीति तं परस्ताच्छंदोभिः पर्यगृण्हान्नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः पारिक्षित्या जगत्याः कारव्ययानुष्टुभस्तत्पुनः छंदः सुरसमदधात्सरसैर्हास्य छंदोभिरिष्टं भवति सरसैश्छंदोभिर्यज्ञं तनुते य एवं वेद. नाराशंसीः शंसति प्रजा वै नरो वाक् शंसः प्रजास्वेव तद्वाचं दधाति· तस्मादिमाः प्रजाः वदत्यो जायंते य एवं वेद. यदेव नाराशंसीः ३ शंसंतो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतयजमानाः शंसंत एव स्वर्गं लोकं यंति. ताः प्रग्राहं शंसति यथा वृषाकपिं. वार्षाकपं हि वृषाकपेस्तन्न्यायमेति· तासु न न्यूंखयेन्नीवीव नर्दंत्स हि तासां न्यूंखो· रैभीः शंसति. रेभंतो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतयजमाना रेभंत एव स्वर्गं लोकं यंति. ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्न्यायमेति· तासु न न्यूंखयेन्नीवीव नर्दंत्स हि तासां न्यूंखः· पारिक्षितीः शंसत्यग्निर्वै परिक्षिद् अग्निर्हीमाः प्रजाः परिक्षेत्यग्निं हीमाः प्रजाः परिक्षियंत्यग्नेरेव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद यदेव पारिक्षितीः ३. संवत्सरो वै परिक्षित्संवत्सरो हीमाः प्रजाः परिक्षेति संवत्सरं हीमाः प्रजाः परिक्षियंति, संवत्सरस्यैव सायुज्यं सरूपतां सलोकताम श्नुते य एवं वेद. ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्न्यायमेति. तासु न न्यूंखयेन्नीवीव नर्दंत्स हि तासां न्यूंखः· कारव्याः शंसति. देवा वै यत्किंच कल्याणं कर्माकुर्वंस्तत्का·

रव्याभिरवामुवंस्तथैवैतद्यजमानाः यत्किंच कल्याणं कर्म कुर्वंति तत्कारव्याभिराप्नुवंति. ताः प्रगाहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्नायमेति. तासु न न्यूंखयेन्नीचीव नर्देत्स हि तासां न्यूंखो दिशां क्लृप्तीः शंसति. दिश एव तत्कल्पयति. ताः पंच शंसति. पंच वा इमा दिशश्चतस्रस्तिरश्च एकोर्ध्वा. तासु न न्यूंखयेन्नैव च निर्नर्देन्नेदिमा दिशो न्यूंखयानीति ता अर्धर्चशः शंसति. प्रतिष्ठाया एव जनकल्पाः शंसति. प्रजा वै जनकल्पा दिश एव तत्कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति. तासु न न्यूंखयेन्नैव च निर्नर्देन्नेदिमाः प्रजाः न्यूंखयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एव. इंद्रगाथाः शंसतींद्रगाथाभिर्वै देवा असुरानभिगायाथैनानत्यायंस्तथैवैतद्यजमाना इंद्रगाथाभिरेवाप्रियं भ्रातृव्यमभिगायाथैनमति यंति. ता अर्धर्चशः शंसति प्रतिष्ठाया एव ॥ ३२ ॥

ऐतशप्रलापं शंसत्यैतशो ह वै मुनिरग्नेरायुर्ददर्श यज्ञस्यायातयाममिति हैक आहुः सो ऽब्रवीत्पुत्रान्पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि यत्किंच वदामि तन्मे मा परिगातेति स प्रत्यपद्यतैता अश्वा आप्लवंते प्रतीपं प्रातिसत्वनमिति. तस्याभ्यग्निरैतशायन ऐत्याकाले ऽभिहाय मुखमप्यगृण्हाददृपं नः पितेति तं होवाचापेह्यलसो भूयो मे वाचमवधीः. शतायुं गामकरिष्यं सहस्रायुं पुरुषं पापिष्ठां ते प्रजां करोमि यो मेत्थमसक्था इति तस्मादाहुरभ्यग्नय ऐतशायना और्वाणां पापिष्ठा इति. तं हैके भूयांसं शंसंति. स न निषेधेद्यावत्कामं शंसेत्येवं ब्रूयादायुर्वा ऐतशप्रलाप आयुरेव तद्यजमानस्य प्रतारयति य एवं वेद यदेवैतशप्रलापा ३:. छंदसां हैष रसो यदैतशप्रलापः छंदस्स्वेव तद्रसं दधाति. सरसैर्हास्य छंदोभिरिष्टं भवति सरसैच्छंदोभि-

यज्ञं तनुते य एवं वेद यद्वैवैतशप्रलापा३ः. अयातयामा व अक्षितिरैतशप्रलापो ऽयातयामा मे यज्ञे ऽसदक्षितिर्मे यज्ञे ऽसदिति तं वा एतमैतशप्रलापं शंसति. यदावग्राहं यथा निविदं तस्यो त्तमेन पदेन प्रणौति यथा निविदः. प्रवल्हिकाः शंसति. प्रवल्हिक भिर्वै देवाः असुरान्प्रवल्ह्याथैनानत्यायंस्तथैवैतद्यजमानाः प्रवल्हिक भिरेवाप्रियं भ्रातृव्यं प्रवल्ह्याथैनमतियंति. ता अर्धर्चशः शंसति प्रतिष्ठाया एव. आजिज्ञासेन्याः शंसत्याजिज्ञासेन्याभिर्वै देवा असुर नाज्ञायाथैनानत्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियं भ्रा तृव्यमाज्ञायाथैनमति यंति. ता अर्धर्चशः शंसति प्रतिष्ठाया एव. प्रति राधं शंसति. प्रतिराधेन वै देवा असुरान्प्रतिराध्याथैनानत्यायंस्तथै वैतद्यजमानाः प्रतिराधेनैवाप्रियं भ्रातृव्यं प्रतिराध्याथैनमतियंति अतिवादं शंसत्यतिवादेन वै देवा असुरानत्युद्याथैनानत्यायंस्तथैवैतद्य जमाना अतिवादेनैवाप्रियं भ्रातृव्यं अत्युद्याथैनमयंति. तमर्ध र्चशः शंसति प्रतिष्ठाया एव ॥ ३३ ॥

देवनीथं शंसत्यादित्याश्च ह वा अंगिरसश्च स्वर्गे लोके स र्धंत. वयं पूर्वे एष्यामो वयमिति ते हांगिरसः पूर्वे श्वः सुत्यां स्वर्गस्य लोकस्य ददृशुस्ते ऽग्निं प्रजिघ्युरंगिरसां वा एको ऽग्निः परेह्यादित्ये भ्यः श्वः सुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति ते हादित्या अग्नि मेव दृष्ट्वा सद्यः सुत्यां स्वर्गस्य लोकस्य ददृशुस्तानेत्य ब्रवीच्छ्व सुत्यां वः स्वर्गस्य लोकस्य प्रब्रूम इति ते हाचुः अथ वयं तुभ्यं सद्यः सुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्रा स्वर्गं लोकमेष्याम इति स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम. ते होचुः प्रावोचा३ः इति प्रावोचमिति होवाचाथो मे प्रति प्रावो चन्निति नो हि न प्रत्यज्ञास्था ३ः इति प्रति वा आज्ञासमिति

होवाच यशसा वा एषो ऽभ्यैति य आर्त्विज्येन तं यः प्रतिरुंधे यशः संप्रतिरुंधेत्तस्मान्न प्रत्यरौत्सीति यदि त्वस्मादपोज्जिगांसेद्य-ज्ञेनास्मादपोदियात्; यदि त्वयाज्यस्त्वयमपोदितं तस्मात् ॥ ३४ ॥

ते हादित्याश्चांगिरसो याजयंस्तेभ्यो याजयद्भ्यो इमां पृथिवीं पूर्णां दक्षिणानामददुस्तानियं प्रतिगृहीता तपत्ता न्यवृंजंस्सा हि सिंहीभूत्वा विजृंभंती; जनानचरत्तस्याः शोचत्या इमे प्रदराः प्रादीर्यंत ये ऽस्या इमे प्रदराः समेव हैव ततः पुरा. तस्मादाहुर्न निवृत्तदक्षिणां प्रतिगृण्हीयान्नेन्मा शुचा विध्या शुचा विध्यादिति यदि त्वेनां प्रतिगृण्हीयादप्रियायैनां भ्रातृव्याय दद्यात्परा हैव भवत्यथ यो ऽसौ तपती २३. एषो ऽश्वः श्वेतो. रूपं कृत्वा ऽश्वाभि-धान्यपिहितेनात्मना प्रतिचक्रम; इमं वो नयाम इति स एष देवनीथो ऽनूच्यत. आदित्या ह जरितरंगिरोभ्यो दक्षिणामनयन्. तां ह जरितर्न प्रत्यायन्निति न हि त इमां प्रत्यायंस्तामु ह जरितः प्रत्यायन्निति प्रति हि ते ऽमुमायंस्तां ह जरितर्न प्रत्यगृभ्णन्निति न हि त इमां प्रत्यगृभ्णंस्तमुह जरितः प्रत्य-गृभ्णन्निति प्रति हि ते ऽमुमगृभ्णन्. अहा नेतसन्नविचेतनानीत्येष ह वा अन्हां विचेतयिता जज्ञा नेतसन्न पुरोगवास इति दक्षिणा वै यज्ञानां पुरोगवी यथा ह वा इदमनो पुरोगवं रिष्यत्येवं हैव यज्ञो ऽदक्षिणो रिष्यति. तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापि; उत श्वेत आशुपत्वा उतोपाद्याभिर्जविष्ठः उतेमाशु मानं पिपर्ति; आदित्या रुद्रा वसवस्त्वेळते इदं राधः प्रतिगृभ्णीह्यंगिर इति प्रतिग्रहमेव तद्राधस ऐच्छन् इदं राधो बृहत्पृथु. देवा ददत्वा वरं तद्वो अस्तु सुचेतनं, युष्मे अस्तु दिवे दिवे प्रत्येव गृ-

भायतेति प्रत्येवैनमेतदजग्रभैषं. तं वा एतं देवनीथं शंसति पदावग्राहं यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः ॥ ३५ ॥

भूतेछदः शंसति. भूतेछाद्भिर्वै देवा असुरानुपासचंतोतेव युध्ये-नोतेव मायया तेषां वै देवा असुराणां भूतेछद्भिरेव भूतं छाद-यित्वा. ऽथैनानत्यायंस्तथैवैतद्यजमाना भूतेछद्भिरेवाप्रियस्य भ्रातृ-व्यस्य भूतं छादयित्वाथैनमतियंति. ता अर्धर्चशः शंसति प्रतिष्ठाया एव. आहनस्याः शंसत्याहनस्याद्वै रेतः सिच्यते. रेतसः प्रजाः प्रजायंते प्रजातिमेव तद्दधाति. ता दश शंसति दशा-क्षरा विराळन्नं विराळन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजा-यंते प्रजातिमेव तद्दधाति. ता न्यूंखयत्यन्नं वै न्यूंखो ऽन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजायंते प्रजातिमेव तद्दधाति. दधि-क्राव्णो अकारिषमिति दाधिक्रीं शंसति. देवपवित्रं वै दधिक्रा इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेण वाचं पुनीते. सानुष्टुब् भवति वाग्वाअनुष्टुप् तत्स्वेन छंदसा वाचं पुनीते. सुता सो मधुमत्तमा इति पावमानीः शंसति. देवपवित्रं वै पावमान्य इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेणैव वाचं पुनीते. ता अनुष्टुभो भवंति वाग्वा अनुष्टुप् तत्स्वेनैव छंदसा वाचं पुनीते. अव द्रप्सो अंशुमतीमतिष्ठदित्यैंद्राबार्हस्पत्यं तृचं शंसति. विशो अदेवीरभ्याचरंतीर् बृहस्पतिनायुजेंद्रः ससाह इत्यसुरविशं ह वै देवानभ्युदाचार्य आसीत्स इंद्रो बृहस्पतिनैव युजासुर्यं वर्णमभि-दासं तमपाहंस्तथैवैतद्यजमाना इंद्राबृहस्पतिभ्यामेव युजासुर्यं वर्णमभिदासं तमपघ्नते. तदाहुः संशंसेत् षष्ठे ऽहा ३न् न संशंसे ३त् इति संशंसेदित्याहुः कथमन्येष्वहःसु संशंसति कथमत्र न संशं-सेदित्यथो खल्वाहुर्नैव संशंसेत्स्वर्गो वै लोकः षष्ठमहरसमायी

वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसती३ तत्स्वर्गस्य लोकस्य रूपं. तस्मान्न संशंसेद्यदेव न संशंसती३ँ एतानि वा आत्रोक्थानि नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुत्स यत्संशंसदेवैव स एतेषु कामं गाप्नुयादैंद्रो वृषाकपिः सर्वाणि छंदांस्यैतशप्रलापस्तत्र स काम उपाप्तो य ऐंद्रे जागते उपैंद्रमैंद्राबार्हस्पत्यं सूक्तमैंद्राबार्हस्पत्या परिधानीया तस्मान्न संशंसेन्न संशंसेत्. ॥ ३६ ॥ इत्यैतरेयब्राह्मणे षष्ठपंचिकायां पंचमोऽध्यायः इति षष्ठपंचिका समाप्ता ॥

---

अथ सप्तमपंचिकाप्रारंभः ॥ श्रीगणेशाय नमः ॥ ॐ ॥ अथातः पशोर्विभक्तिस्तस्य विभागं वक्ष्यामो॰ हनू सजिव्हे प्रस्तोतुः; श्येनं वक्ष उद्गातुः; कंठः काकुद्रः प्रतिहर्तुः; दक्षिणाश्रोणिर्होतुः, सव्या ब्रह्मणः दक्षिणं सक्थि मैत्रावरुणस्य, सव्यं ब्राह्मणाच्छंसिनो; दक्षिणं पार्श्वं सांसमध्वर्योः, सव्यमुपगातॄणां; सव्योंसः प्रतिप्रस्थातुर्दक्षिणं दोर्नेष्टुः, सव्यं पोतुर्दक्षिण ऊरुरछावाकस्य, सव्य आग्नीध्रस्य; दक्षिणो बाहुरात्रेयस्य, सव्यः सदस्यस्य; सदं चानूकं च गृहपतेर्दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति॰ तं गृहपतिरेव प्रशिज्जापर्नीं पत्नीभ्यो हरंति तां ब्राम्हणाय दद्युः स्कंध्याश्च णिकास्तिस्रश्च कीकसा ग्रावस्तुतस्तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतु अर्धं च वैकर्तस्य क्लोमाच शमितुस्तद् ब्राह्मणाय दद्याद्यब्राह्मणःस्याच्छिरःसुब्रह्मण्यायै. यः श्वः सुत्यां प्राह तस्याजिनं इला सर्वेषां होतुर्वा. ता वा एता षट्त्रिंशतमेकपदा यज्ञं वहंति; षट्त्रिंशदक्षरा वै बृहती बार्हताः स्वर्गा लोकाः प्राणांश्चैव तत्स्वर्गांश्च

लोकानाप्नुवंति प्राणेषु चैव तत्स्वर्गेषु लोकेषु प्रतितिष्ठंतो यंति. स एष स्वर्ग्यः पशुर्य एनमेवं विभजंत्यथ ये ऽतो ऽन्यथा तद्यथा सेलगा वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत्तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदां चकार. तामु हाप्रोच्यैवास्माल्लोकादुच्चक्रामत्तामु ह गिरिजाय बाभ्रव्याय ऽमनुष्यः प्रोवाच. ततो हैनामेतदर्वाङ् मनुष्या अधीयते ऽधीयते ॥१॥ इत्यैतरेयब्राह्मणे सप्तमपंचिकायां प्रथमो ऽध्यायः ॥ १ ॥

तदाहुर्य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञः स्यादिति ? नैनं याजयेदित्याहुरनभिप्राप्तो हि यज्ञं भवतीति तदाहुर्य आहिताग्निरधिश्रिते ऽग्निहोत्रे सान्नाय्ये वा हविःषु वा म्रियेत का तत्र प्रायश्चित्तिरित्यत्रैवैनान्यनुपर्यादध्याद्यथा सर्वाणि संदह्येरन्त्सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरासन्नेषु हविःषु म्रियेत का तत्र प्रायश्चित्तिरिति ? याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवंति ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुंति जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निः प्रवसन्म्रियेत कथमस्याग्निहोत्रं स्यादित्यभिवान्यवत्सायाः पयसा जुहुयादन्यदिवैतत्पयो यदभिवान्यवत्साया अन्यदिवैतदग्निहोत्रं यत्प्रेतस्यापि वा यत एव कुतश्च पयसा जुहुयुरथाप्याहुरवमेवैनानजस्रानजुह्वत इंधीरन्ना शरीराणामाहर्तोरिति यदि शरीराणि न विद्येरन्पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपकमिव कृत्वा तस्मिंस्तामावृतं कुर्युरथैनान्छरीरैराहृतैः संस्पर्श्योद्वासयेयुरध्यर्धशतं काये सक्थिनी द्विपंचाशे च विंशे चोरू द्विपंचविंशे ग्रीवं तु शिरस्युपरिदध्यात्सा तत्र प्रायश्चित्तिः॥२॥

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चि

त्तिरिति तामभिमंत्रयेत. यस्माद्भीषा निषीदसि ततो नोऽभयं कृधि पशून्नः सर्वान् गोपाय नमो रुद्राय मीळ्हुष इति तामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात्; इंद्राय कृण्वती भागं मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै. शान्तिर्वा अन्नं; सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्यंदेत का तत्र प्रायश्चित्तिरिति? सा यत्तत्र स्कंदयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्याद् यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः ॥ ३ ॥

तदाहुर्यस्य सायं दुग्धं सान्नाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरिति? प्रातर्दुग्धं द्वैधं कृत्वा तयोरन्यतरां भक्तिमातच्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य प्रातर्दुग्धं सान्नाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरित्यैंद्रं वा माहेंद्रं वा पुरोळाशं तस्य स्थाने निरुप्य तेन यजेत सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वमेव सान्नाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरित्यैंद्रं वा माहेंद्रं वेति समानं सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्वाण्येव हवींषि दुष्येयुर्वाऽपहरेयुर्वा का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतं परिकल्प्य तयाज्यहविषेष्ट्या यजेतातोऽन्यामिष्टिमनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ॥ ४ ॥

तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत का तत्रप्रायश्चित्तिरिति सर्वमेवैनत्स्रुच्यभिपर्यासिच्य प्राङुदेत्याहवनीये हैतां समिधमभ्यादधात्यथोत्तरत आहवनीयस्योष्णं भस्म निरूह्य जुहुयान्मनसा वा प्राजापत्यया वर्चा तद्धुतंचाहुतं च स यद्येकस्मिन्नुन्नीते यदि द्वयोरेष एव कल्पस्तच्चेद् व्यपनयितुं शक्नुयान्निर्णिज्यैतद्दुष्टमभिपर्यासिच्य तस्य यथोन्नीतं स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कंदति वा विष्यंदेत वा का तत्र प्रायश्चित्तिरिति तदद्भिरुपनिनयेच्छांत्यै शांतिर्वा आपोऽथैनद्दक्षिणेन पाणिनाऽभिमृश्य जपति. दिवं तृतीयं देवान्यज्ञो गात्ततो मा द्रविणमाष्टांतरिक्षं तृतीयं पितॄन् यज्ञो गात्ततो मा द्रविणमाष्ट पृथिवीं तृतीयं मनुष्यान् यज्ञो गात्ततो मा द्रविणमाष्ट• ययोरोजसा स्कभिता रजांसीति वैष्णवारुणीमृचं जपति. विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टं तयोरुभयोरेव शांत्यै सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्निहोत्रमधिश्रितं प्राङुदाव्रजन्स्खलेत वाऽपि वा भज्येत का तत्र प्रायश्चित्तिरिति स यदुपनिवर्तयेत्स्वर्गाल्लोकाद्यजमानमावर्तयेत्तत्रैवासीनायोपविष्टायैनमग्निहोत्रपरिशेषमाहरेयुस्तस्य यथोन्नीतं स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिस्तदाहुरथ यदि स्रुग्भिद्येत का तत्र प्रायश्चित्तिरित्यन्यां स्रुचमाहृत्य जुहुयादथैतां स्रुचं भिन्नामाहवनीयेऽभ्यादध्यात्प्राग्दंडां प्रत्यक्पुष्करां सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याहवनीये हाग्निर्ध्रियेताथ गार्हपत्य उपशाम्येत्का तत्र प्रायश्चित्तिरिति स यदि प्रांचमुद्धरेदायतनाच्च्यवेत यत्प्रत्यंचमसुरवद्यज्ञं तन्वीत यन्मंथेद् भ्रातृव्यं यजमानस्य जनयेद्यदनुगमयेत्प्राणो यजमानं जह्यात्सर्वमेवैनं सहभस्मानं समोप्य गार्हपत्यायतने निधायाथ प्रांचमाहवनीयमुद्धरेत्सा तत्र प्रायश्चित्तिः ॥ ५ ॥

तदाहुर्यस्याग्नावग्निमुद्धरेयुः का तत्र प्रायश्चित्तिरिति स यद्यनुपश्येदुद्धृत्य पूर्वमपरं निदध्याद्यद्यनानुपश्येत्सोऽग्नयेऽग्निवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अग्निनाग्निः समिध्यत, त्वं ह्यग्ने अग्निनेत्याहुतिं वाहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां का तत्र प्रायश्चित्तिरिति ? सोऽग्नये वीतयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अग्न आयाहि वीतये, यो अग्निं देववीतय इत्याहुतिं वाहवनीये जुहुयादग्नये वीतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन्का तत्र प्रायश्चित्तिरिति ? सोऽग्नये विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, स्वर्ण वस्तोरुषसामरोचि, त्वामग्ने मानुषीरीळते विश इत्याहुतिं वाहवनीये जुहुयादग्नये विविचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन्का तत्र प्रायश्चित्तिरिति ? सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अक्रंददग्निस्तनयन्निव द्यौः, अधा यथा नः पितरः परास इत्याहुतिं वाहवनीये जुहुयादग्नये क्षामवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ६ ॥

तदाहुर्यस्याग्नयो ग्राम्येणाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति ? सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, कुवित्सु नो गविष्टये, मा नो अस्मिन्महाधन इत्याहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति ? सोऽग्नयेऽप्सुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अप्स्वग्ने सधिष्टव, मयो दधे मेधिरः

पूतदक्ष इत्याहुतिं वाहवनीये जुहुयादग्नये ऽप्सुमते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन् का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये शुचये ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अग्निः शुचिव्रततम, उदग्ने शुचयस्तवेत्याहुतिं वाहवनीये जुहुयादग्नये शुचये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्याग्नय आरण्येनाग्निना संदह्येरन् का तत्र प्रायश्चित्तिरिति ? समवारोपयेदरणी वोल्मुकं वा मोक्षयेद्यद्याहवनीयाद्यदि गार्हपत्याद्यदि न शक्नुयात्सो ऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्योक्ते याज्यानुवाक्ये आहुतिं वाहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ७ ॥

तदाहुर्य आहिताग्निरुपवसथे ऽश्रु कुर्वीत का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये व्रतभृते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, त्वमग्ने व्रतभृच्छुचिर्, व्रतानि बिभ्रद् व्रतपा अदब्ध इत्याहुतिं वाहवनीये जुहुयादग्नये व्रतभृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरुपवसथे ऽव्रत्यमापद्येत का तत्र प्रायश्चित्तिरिति? सो ऽग्नये व्रतपतये ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, त्वमग्ने व्रतपा असि, यद्वो वयं प्रमिनाम व्रतानीत्याहुतिं वाहवनीये जुहुयादग्नये व्रतपतये स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निरमावास्यां पौर्णमासीं वा ऽतीयात्का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये पथिकृते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, वेत्था हि वेधो अध्वन, आ देवानामपि पंथामगन्मेत्याहुतिं वाहवनीये जुहुयादग्नये पथिकृते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन् का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये तपस्वते जन-

द्वते पावकवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, आयाहि तपसा जनेषु, आ नो याहि तपसा जनेष्वित्याहुतिं वाहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ८ ॥

तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, वैश्वानरो अजीजनत्, पृष्टो दिवि पृष्टो अग्निः पृथिव्यामित्याहुतिं वाहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि कपालं नश्येत्का तत्र प्रायश्चित्तिरिति ? सो ऽश्विभ्यां द्विकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, अश्विना वर्तिरस्मद्, आ गोमता नासत्या रथेनेत्याहुतिं वाहवनीये जुहुयादश्विभ्यां स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि पवित्रं नश्येत का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये पवित्रवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, पवित्रं ते विततं ब्रम्हणस्पते, तपोष्पवित्रं विततं दिवस्पद इत्याहुतिं वाहवनीये जुहुयादग्नये पवित्रवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि हिरण्यं नश्येत्का तत्र प्रायश्चित्तिरिति ? सोऽग्नये हिरण्यवते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, हिरण्यकेशो रजसो विसार, आ ते सुपर्णा अमिनंतँ एवैरित्याहुतिं वाहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहिताग्निर्यदि प्रातस्नातोऽग्निहोत्रं जुहुयात् का तत्र प्रायश्चित्तिरिति ? सो ऽग्नये वरुणायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, त्वं नो अग्ने वरुणस्य विद्वाँ, स त्वं नो अग्ने ऽवमो भवोतीत्याहुतिं वाहवनीये

जुहुयादग्नये वरुणाय स्वाहेति सा तत्र प्रायश्चित्तिस्तदाहुर्य आहि-
ताग्निर्यदि सूतकान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरिति? सोऽग्नये
तंतुमते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये, तंतुं
तन्वन्रजसो भानुमन्विहि, अक्षानहो नह्यतनोत सोम्या इत्याहुतिं
वाहवनीये जुहुयादग्नये तंतुमते स्वाहेति सा तत्र प्रायश्चित्तिस्त-
दाहुर्य आहिताग्निर्जीवं मृतशब्दं श्रुत्वा का तत्र. प्रायश्चित्तिरिति?
सोऽग्नये सुरभिमते ऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये,
अग्निर्होता न्यसीदद्यजीयां, साध्वीमकर्देववीतिं नो अद्येत्याहुतिं
वाहवनीये जुहुयादग्नये सुरभिमते स्वाहेति सा तत्र प्रायश्चित्ति
स्तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र
प्रायश्चित्तिरिति? सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं
निर्वपेत्तस्य याज्यानुवाक्ये, मरुतो यस्य हि क्षये, अरा इवेदचरमा
अहेवेत्याहुतिं वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र
प्रायश्चित्तिस्तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरे३त् नाहरे३त् इति आहरे
दित्याहुर्यदि नाहरेदनद्धापुरुषः को ऽनद्धापुरुष इति? न देवान्न
पितॄन्न मनुष्या इति तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्तदप्यभियज्ञ-
गाथा गीयते. यजेत्सौत्रामण्यामपत्नीकोऽप्यसोमपः मातापितृ-
भ्यामनृणार्थाद्यजेति वचनात्क्रुतिरिति तस्मात्सौम्यं याजयेत्.
॥ ९ ॥

तदाहुर्वाचाऽपत्नीकोऽग्निहोत्रं कथमिव जुहोति निविष्टे मृता पत्नीः
नष्टावाग्निहोत्रं कथमग्निहोत्रं जुहोति? पुत्रान्पौत्रान्नप्तॄनित्याहुरस्मिंश्च
लोके ऽमुष्मिंश्चास्मिन् लोके ऽयं स्वर्गो स्वर्गेण स्वर्गं लोकमारुरोहेत्य-
मुष्यैव लोकस्य संततिं धारयति यस्यैषां पत्नीं नैच्छेत्तस्मादपत्नीक
स्याधानं कुर्वन्न्यपत्नीको ऽग्निहोत्रं कथमग्निहोत्रं जुहोति? श्रद्धा पत्नी

सत्यं यजमानः श्रद्धा सत्यं तदित्युत्तमं मिथुनं; श्रद्धया सत्येन मिथुनेन स्वर्गां लोकां जयंतीति ॥ १० ॥

तदाहुर्यद्दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नंति. तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति पूर्वां पौर्णमासीमुपवसेदिति पैंग्यमुत्तरामिति कौषीतकं. या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका; या पूर्वामावास्या सा सिनीवाली; योत्तरा सा कुहूर्यां पर्यस्तमियादभ्युदियादिति सा तिथिः पूर्वां पौर्णमासीमुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चंद्रमसं यदुपैति यदवजनेन सोमं क्रीणाति. तेनोत्तरामुत्तरामुपवसेदुत्तराणि ह वै सोमा जने सोममनुदैवतमेतद्वै देवसोमं यच्चंद्रमास्तस्मात्तस्मादुत्तरामुपवसेत् ॥ ११ ॥

तदाहुर्यस्याग्निमनुद्धृतमादित्यो ऽभ्युदियाद्वा ऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत्का तत्र प्रायश्चित्तिरिति ? हिरण्यं पुरस्कृत्य सायं उद्धरेज्ज्योतिर्वै शुक्रं हिरण्यं ज्योतिः शुक्रमसौ देवस्तज्ज्योतिः शुक्रं पश्यन्नुद्धरति. रजतमंतर्धाय प्रातरुद्धरेदेतद्रात्रिरूपं पुरा संभेदा च्छायानामाहवनीयमुद्धरेन्मृत्युर्वै तमश्छाया स्तेन तज्ज्योतिषा मृत्युं तमश्छायां तरति सा तत्र प्रायश्चित्तिस्तदाहुर्यस्य गार्हपत्याहवनीयावंतरेणा नो वा रथो वा ऽश्वो वा ऽतिपद्येत का तत्र प्रायश्चित्तिरिति ? नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवंतीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविछिन्नामुदकधारां हरेत्, तंतुं तन्वन्रजसो भानुमन्विहीत्याहवनीयात्सा तत्र प्रायश्चित्तिस्तदाहुः कथमग्नीनन्वादधानो ऽन्वाहार्यपचनमाहरये३ त्नाहरये३ दिति आहारयेदित्याहुः प्राणान्वा एषो ऽध्यात्मं धत्ते यो ऽग्नीनाधत्ते तेषामेषो ऽन्नादतमो भवति यदन्वाहार्यपचन-

स्तस्मिन्नेतामाहुतिं जुहोत्यग्नये ऽन्नादायान्नपतये स्वाहेति अन्नादो
हान्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं वेद. अंतरेण गार्हपत्याह-
वनीयौ होध्र्यं संचरेत्तेन ह वा एनं संचरमाणमसुरा विदुरय-
मस्मासु होष्यतीत्येतेन ह वा अस्य संचरमाणस्य गार्हपत्या-
हवनीयौ पाप्मानमपहतः सो ऽपहतपाप्मोर्ध्वः स्वर्गं लोकमेतीति
वै ब्राह्मणमुदाहरंति. तदाहुः कथमग्नीन्प्रवत्स्यन्नुपतिष्ठेत प्रोष्य वा-
प्रत्येत्याहरहर्वेति तूष्णीमित्याहुः तूष्णीं श्रेयस आकांक्षंते ऽथा-
प्याहुरहरहर्वा एते यजमानस्याश्नंधयोर्होमनान्नप्रावनाद्बिभ्यति.
तानुपतिष्ठेताभयं वो ऽभयं मे ऽस्त्वित्यभयं हैवास्मै भवत्यभयं
हैवास्मै भवति ॥ १२ ॥ इत्यैतरेयब्राह्मणे सप्तमपंचिकाया
द्वितीयो ऽध्यायः ॥ २ ॥

हरिश्चंद्रो ह वैधस ऐक्ष्वाको राजा ऽपुत्र आस. तस्य ह शतं
जाया बभूवुः तासु पुत्रं न लेभे. तस्य ह पर्वतनारदौ गृह ऊषतुः
स ह नारदं पप्रच्छ. यन्विमं पुत्रमिच्छंति ये विजानंति ये च न:
किंस्वित्पुत्रेण विंदते तन्म आचक्ष्व नारदेति स एकया पृष्टो दशभिः
प्रत्युवाच. ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति; पिता पुत्रस्य जातस्य
पश्येच्चेज्जीवतो मुखं. यावंतः पृथिव्यां भोगा यावंतो जात-
वेदसि ; यावंतो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः. शश्वत्पुत्रेण
पितरो ऽत्यायन्बहुलं तमः; आत्मा हि जज्ञ आत्मनः स इराव-
त्यतितारिणी. किन्नु मलं किमजिनं किमु श्मश्रूणि किं तपः; पुत्रं
ब्रह्माण इच्छध्वं स वै लोको ऽवदावदः. अन्नं ह प्राणः शरणं
ह वासो रूपं हिरण्यं पशवो विवाहाः; सखा ह जाया कृपणं
ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन्. पतिर्जायां प्रविशति
गर्भो भूत्वा स मातरं; तस्यां पुनर्नवो भूत्वा दशमे मासि जायते.

तज्जाया जाया भवति यदस्यां जायते पुनः; आभूतिरेषा भूति र्बीजमेतन्निधीयते. देवाश्चैतामृषयश्च तेजः समभरन्महत्; देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः. नापुत्रस्य लोकोऽस्तीतितत्सर्वे पशवो विदुः; तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति· एष पंथा उरुगायः सुशेवो यं पुत्रिण आक्रमंते विशोकाः; तं पश्यंति पशवो वयांसिच तस्मात्ते मात्रापि मिथुनीभवंतीति ह स्मा आख्याय ॥ १३ ॥

अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति तथेति. स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति ·तथेति· तस्य ह पुत्रो जज्ञे रोहितो नाम तं होवाचाजनि ते वै पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति. निर्दशो ऽन्वस्त्वथ त्वा यजा इति तथेति स ह निर्दश आस. तं होवाच निर्दशो ऽन्वभूद्य-जस्व मानेनेति स होवाच यदा वै पशोर्दंता जायंते ऽथ स मेध्यो भवति. दंता ऽन्वस्य जायंतामथ त्वा यजा इति तथेति. तस्य ह दंता जज्ञिरे. तं होवाचाज्ञतवा अस्य दंता यजस्व मानेनेति स होवाच. यदा वै पशोर्दंताः पद्यंते ऽथ स मेध्यो भवति. दंता ऽन्वस्य पद्यंतामथ त्वा यजा इति तथेति तस्य ह दंताः पेदिरे. तं होवाचापत्सतवा अस्य दंता यजस्व मानेनेति स होवाच. यदा वै पशोर्दंताः पुनर्जायंते ऽथ स मेध्यो भवति. दंता ऽन्वस्य पुनर्जायंतामथ त्वा यजा इति तथेति. तस्य ह दंताः पुनर्जज्ञिरे. तं होवाचाज्ञतवा अस्य पुनर्दंता यजस्व मानेनेति स होवाच यदा वै क्षत्रियः सान्नाहुको भवत्यथ स मेध्यो भवति सन्नाहन्नु प्राप्नोत्वथ त्वा यजा इति तथेति· स ह सन्नाहं प्रापत्तं होवाच सन्नाहन्नु प्राप्नोद्यजस्व माने

नमो अर्भकेभ्यो नमो इत्येतयर्चा. तं विश्वेदेवा ऊचुरिंद्रो वै देवाना मोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तन्नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इंद्रं तुष्टाव, यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य पंचदशभिस्तस्मा इंद्रःस्तूयमानः प्रीतो मनसा हिरण्य रथं ददौ. तमेतया प्रतीयाय, शश्वदिंद्र इति तमिंद्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सो ऽश्विनौ तुष्टावात उत्तरेण तृचेन. तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन. तस्य ह स्मर्च्यृच्युक्तायां विपाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां विपाशो मुमुचे- ऽगद ऐक्ष्वाक आस ॥ १६ ॥

तमृत्विज ऊचुस्त्वमेव नो ऽस्यान्हः संस्थामधिगच्छेत्यथ हैतं शुनःशेपो ऽंजःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोणकलशमभ्यवनिनाय, उच्छिष्टं चम्वोर्भरेत्येत- यर्चा ऽथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिःस स्वाहाकाराभिर्जुहवां चकाराथैनमवभृथमभ्यवनिन्नाय, त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्या मथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयां चकार, शुनश्चिच्छेपं निदितं सहस्रादित्यथ ह शुनःशेपो विश्वामित्रस्यांकमाससाद. स होवा- चाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति नेति होवाच. वि- श्वामित्रो देवा वा इमं मह्यमरासतेति स ह देवरातो वैश्वामि- त्र आस. तस्यैते कापिलेयबाभ्रवाः स होवाचाजीगर्तः सौय- वासिस्त्वं वेहि विव्हयावहा इति स होवाचाजीगर्तः सौयवसिरां- गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः; ऋषे पैतामहात्तंतोर्मा ऽपगाः पुनरेहि मामिति स होवाच शुनःशेपो दर्शुस्त्वा शासहस्तं न य- च्छद्रेष्वलप्सतः गवां त्रीणि शतानि त्वमवृणीथा मदंगिर इति

स होवाचाजीगर्तः सौयवसिस्तद्वै मा तात तपति पापं कर्म मया कृतं, तदहं निन्हवे तुभ्यं प्रतियंतु शता गवामिति स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततो ऽपरं; नापागाः शौद्रान्न्यायाद संधेयं त्वया कृतमित्यसंधेयमिति, ह विश्वामित्र उपपपाद. स होवाच विश्वामित्रो, भीम एव सौयवसिः शासेन विशिशासिषुः; अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रतामिति सहोवाच शुनःशेपः, स वै यथा नो ज्ञपया राजपुत्र तथा वद; यथैवांगिरसः सन्नुपेयां तव पुत्रतामिति स होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्, उपेया दैवं मे दायं तेन वै त्वोपमंत्रय इति स होवाच शुनःशेपः, संज्ञानानेषु वै ब्रूयात्सौहार्दाय मे श्रियै, यथा ऽहं भरत ऋषभोपेयां तव पुत्रतामित्यथ ह विश्वामित्रः पुत्रानामंत्रयामास, मधुछंदाः शृणोतन ऋषभो रेणुरष्टकः ये केच भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति ॥ १७ ॥

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः. पंचाशदेव ज्यायांसो मधुछंदसः पंचाशत्कनीयांसस्तद्ये ज्यायांसो न ते कुशलं मेनिरे.ताननुव्याजहारांतान्वः प्रजा भक्षीष्टेति त एतेंध्राः पुंड्राः शबराः पुलिंदा मूतिबा इत्युदंत्या बहवो भवंति वैश्वामित्रा दस्यूनां भूयिष्ठाः. स होवाच मधुछंदः पंचशता सार्धं, यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयं; पुरस्त्वा सर्वे कुर्महे त्वामन्वंचो वयं स्मसीत्यथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव. ते वै पुत्राः पशुमंतो वीरवंतो भविष्यथ ये मानं मेऽनु गृह्णन्तो वीरवंतमकर्त मा पुर एत्रा वीरवंतो देवरातेन गाथिनाः. सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनं एष वः कुशिका वीरो देवरातस्तमन्वित. युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि. ते सम्यचो वैश्वामित्राः सर्वे साकं सरातयः;

देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः. अधीयत देवरातो रिक्थयोरुभयो ॠषिः; जन्हूनां चाधिपत्ये दैवे वेदे च गाथिनां. तदेतत्पर ऋक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञे ऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे. हिरण्यकशिपावासीनः प्रतिगृणाति. यशो वै हिरण्यं यशसैवैनं तत्समर्धयत्योमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषं. दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुंचति. तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं च नैनः परिशिष्यते. सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्र एते चैवासने श्वेतश्चाश्वतरीरथो होतुः. पुत्रकामा हाप्याख्यापयेरं लभंते ह पुत्रान् लभंते ह पुत्रान् ॥ १८ ॥ इत्यैतरेयब्राम्हणे सप्तमपंचिकायां तृतीयो ऽध्यायः ॥ ३ ॥

प्रजापति र्यज्ञमसृजत यज्ञं सृष्टमनु ब्रम्हक्षत्रे असृज्येतां. ब्रम्हक्षत्रे अनु द्वय्यः प्रजा असृज्यंत हुतादश्चाहुतादश्च. ब्रम्हैवानु हुतादः क्षत्रमन्वहुताद एता वै प्रजा हुतादो यद्ब्राम्हणा. अथैता अहुतादो यद्राजन्यो वैश्यःशूद्रस्ताभ्यो यज्ञ उदक्रामत्तं ब्रम्हक्षत्रे अन्वैतां यान्येव ब्रम्हण आयुधानि तै र्ब्रह्मान्वैद्यानि क्षत्रस्य तं क्षत्रमेतानि वै ब्रह्मण आयुधानि. यद्यज्ञायुधान्यथैतानि क्षत्रस्यायुधानि. यदश्वरथः कवच इषुधन्व तं क्षत्रमनन्वाप्य न्यन्वर्त्ततायुधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनं ब्रह्मान्वैत्तमाप्नोत्तमाप्त्वा परस्तान्निरुध्यातिष्ठत्स आप्तः परस्तान्निरुद्धस्तिष्ठं ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्त्तत. तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितो ऽथैनत्क्षत्रमन्वागच्छत्तदब्रवीदुप मा ऽस्मिन् यज्ञे ह्वयस्वेति तत्तथेत्यब्रवीत्तद्वै निधाय स्वान्यायुधानि ब्रम्हण

एवायुधैर्ब्रम्हणो रूपेण ब्रम्हभूत्वा यज्ञमुपावर्तस्वेति तथेति तत्क्षत्रं निधाय स्वान्यायुधानि ब्रम्हण एवायुधैर्ब्रम्हणो रूपेण ब्रम्हभूत्वा यज्ञमुपावर्तत. तस्मात्साप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रम्हण एवायुधैर्ब्रह्मणो रूपेण ब्रह्मभूत्वा यज्ञमुपावर्तते ॥ १९ ॥

अथातो देवयजनस्यैव याच्ञ्यस्तदाहुर्यद् ब्राह्मणो राजन्यो वैश्यादीक्षिष्यमाणःक्षत्रियं देवयजनंयाचतिकं क्षत्रियो याचेदिति ? दिवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्रमादित्य एषां भूतानामधिपतिः स यदहर्दीक्षिष्यमाणो भवति, तदहः पूर्वाण्ह एवोद्यंतमादित्यमुपतिष्ठत,इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं,देवसवितर्देवयजनं मे देहि देवयाज्याया इति देवयजनं याचति. स यत्तत्र याचित उत्तरां सर्पत्यों तथा ददामीति हैव तदाह तस्य ह नकाचन रिष्टिर्भवति देवेन सवित्रा प्रसूतस्योत्तरोत्तरिर्णी ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमुपस्थाय याचित्वा देवयजनमध्यवसाय दीक्षते क्षत्रियः सन् ॥ २० ॥

अथात इष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य· स पुरस्ताद्दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीतमाज्यमाहवनीय इष्टापूर्तस्यापरिज्यान्यै पुनर्न इंद्रो मघवा ददातु. ब्रम्हपुनरिष्टं पूर्तं दात्स्वाहेत्यथानूबंध्यायै समिष्टयजुषामुपरिष्टात्पुनर्नो अग्निर्जातवेदा ददातु, क्षत्रं पुनरिष्टं पूर्तं दात्स्वाहेति सैषेष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तासादेते होतव्ये ॥ २१ ॥

तदु ह स्माह सौजात आराह्ळिरजीतपुनर्वण्यं वा एतद्यदेते आहुती इति यथा ह कामयेत तथैते कुर्याद इतो नु शासनं कुर्यादितीमे त्वेव जुहुयाद् ब्रम्ह प्रपद्ये ब्रम्ह मा क्षत्रात् गोपायतु

ब्रम्हणे स्वाहेति तत्तदिती३ ब्रम्ह वा एष प्रपद्यते यो यज्ञं प्रप-द्यते ब्रम्ह वै यज्ञो; यज्ञादु ह वा एष. पुनर्जायते यो दीक्षते. तं ब्रम्ह प्रपन्नं क्षत्रं न परिजिनाति. ब्रह्म मा क्षत्राद्गोपायत्वित्याह यथैनं ब्रम्ह क्षत्राद्गोपायेद् ब्रह्मणे स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं क्षत्राद्गोपायत्यथानूबंध्यायै समिष्टयजुषामुपरिष्टात्क्षत्रं प्रपद्ये क्षत्रं मा ब्रम्हणो गोपायतु क्षत्राय स्वाहेति तत्तदिती३ क्षत्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते. क्षत्रं हि राष्ट्रं. तं क्षत्रं प्रपन्नं ब्रम्ह न परिजिनाति. क्षत्रं मा ब्रम्हणो गोपायत्वित्याह यथैनं क्षत्रं ब्रम्हणो गोपायेत्क्षत्राय स्वाहेति तदेनत्प्रीणाति. तदेनत्प्रीतं ब्रम्हणो गोपायति सैषेष्टापूर्तस्यैवापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते एव होतव्ये ॥ २२ ॥

अथेंद्रो वै देवतया क्षत्रियो भवति त्रैष्टुभश्छंदसा पंचदश स्तो-मेन सोमो राज्येन राजन्यो बंधुना. स ह दीक्षमाण एव ब्राम्हणताम-भ्युपैति यत्कृष्णाजिनमध्यूहति यद्दीक्षितव्रतं चरति यदेनं ब्राम्हणा अभि संगच्छंते. तस्य ह दीक्षमाणस्येंद्र एवेंद्रियमादत्ते त्रिष्टुब्वीर्यं पंचदशस्तोम आयुः सोमो राज्यं पितरो यशस्कीर्तिमन्यो वा अयमस्मद्भवति. ब्रम्ह वा अयं भवति ब्रम्ह वा अयमुपावर्तत इति वदंतः. स पुरस्ताद्दीक्षाया आहुतिं हुत्वाहवनीयमुपतिष्ठेत नेंद्राद्देवताया एमि न त्रिष्टुभश्छंदसो न पंचदशात्स्तोमान्न सोमाद्राज्ञो न पित्र्याद्बंधोर्मा म इंद्र इंद्रियमादित मा त्रिष्टुब्वीर्यं मा पंचदशःस्तोम आयुर्मा सोमो राज्यं मा पितरो यशस्कीर्ति. स हेंद्रियेण वीर्येणायुषा राज्येन यशसा बंधुनाग्निं देवतामुपैमि; गायत्री छंद-स्त्रिवृतं स्तोमं सोमं राजानं ब्रम्ह प्रपद्ये; ब्राम्हणो भवामीति तस्य ह नेंद्र इंद्रियमादत्ते न त्रिष्टुब्वीर्यं न पंचदशस्तोम आयुर्न सोमो

राज्यं न पितरो यशस्कीर्ति य एवं एतामाहुतिं हुत्वाहवनीयमुपस्थाय दीक्षते क्षत्रियः सन् ॥ २३ ॥

अथाग्नेयो वै देवतयाक्षत्रियो दीक्षितो भवति गायत्रश्छंदसा त्रिवृत्स्तोमेन ब्राम्हणो बंधुना. स होदवस्यन्नेव क्षत्रियतामभ्युपैति. तस्य होदवस्यतोऽग्निरेव तेज आदत्ते गायत्री वीर्यं त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रह्म यशस्कीर्तिमन्यो वा अयमस्मद्भवति.क्षत्रं वा अयं भवति क्षत्रं वा अयमुपावर्तत इति वदंतः सोऽनुबंध्यायै समिष्टयजुषामुपरिष्टाद्धुत्वाहुतिमाहवनीयमुपतिष्ठेत; नामेर्देवताया एमि न गायत्र्याश्छंदसो न त्रिवृतःस्तोमान्न ब्रह्मणो बंधोर्मा मेऽग्निस्तेज आदित मा गायत्री वीर्यं मा त्रिवृत्स्तोमआयुर्मा ब्राह्मणा यशस्कीर्ति. स ह तेजसा वीर्येणायुषा ब्रम्हणा यशसा कीर्त्यैंद्रं देवतामुपैमि त्रिष्टुभं छंदः पंचदशं स्तोमं सोमं राजानं क्षत्रं प्रपद्ये क्षत्रियो भवामि. देवाः पितरः पितरो देवा योऽस्मि स सन्यजे स्वं म इदमिष्टं स्वं पूर्तं स्वं श्रांतं स्वं हुतं तस्य मे यमग्निरुपद्रष्टायं वायुरुपश्रोतासावादित्योऽनुख्यातेदमहं य एवास्मि सोऽस्मीति तस्य ह नाग्निस्तेज आदत्ते न गायत्री वीर्यं न त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रम्ह यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाहवनीयमुपस्थायोदवस्यति क्षत्रियः सन्॥ २४ ॥

अथातो दीक्षाया आवेदनस्यैव तदाहुर्यद् ब्राम्हणस्य दीक्षितस्य ब्राम्हणो दीक्षिष्टेति दीक्षामावेदयंति कथं क्षत्रियस्यावेदयेदिति यथैवैतद् ब्राम्हणस्य दीक्षितस्य ब्राम्हणो दीक्षिष्टेति दीक्षामावेदयंत्येवमेवैतत्क्षत्रियस्यावेदयेत्पुरोहितस्यार्षेयेणेति तत्तादेतीऽं निधाय वा एष स्वान्यायुधानि ब्रम्हण एवायुधैर्ब्रम्हणो रूपेण ब्रम्ह भूत्वा यज्ञमुपावर्तत. तस्मात्तस्य पुरोहितस्यार्षेयेण दीक्षामावेदयेयुः पुरोहितस्यार्षेयेण प्रवरं प्रवृणीरन् ॥ २५ ॥

अथातो यजमानभागस्यैव तदाहुः प्राश्नीयात्क्षत्रियो यजमानभा-
गाँ३ न प्राश्नीयात्३ ' इति यत्प्राश्नीयादहुताध्रुतं प्राश्य पापीयान्स्या-
द्यन्न प्राश्नीयाद्यज्ञादात्मानमंतरियाद्यज्ञो वै यजमानभागः स ब्रम्हणे
परिहृत्यः पुरोहितायतनं वा एतत्क्षत्रियस्य यद् ब्रम्हार्धात्मो
ह वा एष क्षत्रियस्य यत्पुरोहित उपाह परोक्षेणैव प्राशितरूपमा-
प्नोति. नास्य प्रत्यक्ष भक्षितो भवति. यज्ञ उ ह वा एष प्रत्यक्षं यद्
ब्रम्हा ब्रम्हणि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानो यज्ञ एव तद्य-
ज्ञमप्यत्यर्जति यथा ऽप्स्वापो यथाग्नावग्निं तद्वै नातिरिच्यते तदेनं न हि-
नस्ति. तस्मात्स ब्रम्हणे परिहृत्योऽग्नौ हैके जुव्हति ऽप्रजापतेर्विभान्नाम
लोकस्तस्मिंस्त्वा दधामि. स ह यजमानेन स्वाहेति तत्तथा न कुर्या
द्यजमानो वै यजमानभागो यजमानं ह सोऽग्नौ प्रवृणक्ति य एनं तत्र
ब्रूयाद्यजमानमग्नौ प्रावार्क्षीः प्रास्याग्निः प्राणां धक्ष्यति मरिष्यति
यजमान इति शश्वत्तथा स्यात्तस्मात्तस्याशान्नियादाशान्नेयात्॥२६॥
इत्यैतरेयब्राम्हणे सप्तमपंचिकायां चतुर्थो ऽध्यायः ॥ ४ ॥

विश्वंतरो ह सौषद्मनः श्यापर्णान् परिचक्षाणो विश्यापर्णं यज्ञमा-
जन्हे तत्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुस्ते ह तदंतर्वेद्यासां चक्रिरे.
तान्ह दृष्ट्वोवाच पापस्य वा इमे कर्मणः कर्तार आसते ऽपूतायै
वाचो वदितारो यच्छ्यापर्णा इमानुत्थापयतेमे मेंतर्वेदिमासि-
षतेति तथेति तानुत्थापयां चक्रुस्ते होत्थाप्यमाना रुरुविरे: ये
तेभ्यो भूतवीरेभ्यो ऽसितमृगाः कश्यपानां सोमपीथमभिजिग्युः
पारिक्षितस्य जनमेजयस्य विकश्यपं यज्ञेतैस्ते तत्र वीरवंत आसुः
कः स्वित्सोऽस्माकास्ति वीरो य इमं सोमपीथमभिजेष्यतीत्ययमह-
मस्मि वो वीर इति होवाच रामो मार्गवेयो रामो हास मार्गवे
यो ऽनूचानः श्यापर्णीयस्तेषां होत्तिष्ठतामुवाचापि नु राजन्नित्थं

मिदं वेदेरुत्थापयंतीति यस्त्वं कथं वेत्थ ब्रम्हबंधविति ॥ २७ ॥

यत्रेंद्रं देवताः पर्यवृंजन्विश्वरूपं त्वाष्ट्रमभ्यमंस्त. वृत्रमस्तृत यतीं -सालावृकेभ्यः प्रादादरुर्मघानवधीद् बृहस्पतेः प्रत्यवधीदिति तत्रेंद्रः सोमपीथेन व्यार्ध्येतद्रस्यानुव्यृध्धि क्षत्रं सोमपीथेन व्यार्ध्यतापींद्रः सोमपीथे भवत् त्वष्टुरामुष्य सोमं तद् व्यृत्धमेवाद्यापि क्षत्रं सोमपीथेन. स यस्तं भक्षं विद्याद्यः क्षत्रस्य सोमपीथेन व्यृत्धस्य येन क्षत्रं समृध्यते कथं तं वेदेरुत्थापयंतीति वेत्थ ब्राम्हण त्वं तं भक्षाँ३? वेद हीति तं वै नो ब्राम्हण ब्रूहीति तस्मै वै ते राजन्निति होवाच ॥ २८ ॥

त्रयाणां भक्षाणामेकमाहरिष्यंति सोमं वा दधि वा ऽपो वा. स यदि सोमं, ब्राम्हणानां स भक्षो, ब्राम्हणांस्तेन भक्षेण जिन्विष्यसि. ब्राम्हणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथा कामं प्रयाप्यो. यदा वै क्षत्रियाय पापं भवति ब्राम्हणकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्मा द्वितीयो वा तृतीयो वा ब्राम्हणतामभ्युपैतोः स ब्रम्हबंधवे न जिज्यूषितो. ऽथ यदि दधि वैश्यानां स भक्षो वैश्यांस्तेन भक्षेण जिन्विष्यसि. वैश्यकल्पस्ते प्रजायामाजनिष्यते ऽन्यस्य बलिकृदन्यस्याद्यो यथाकाम ज्येयो. यदा वै क्षत्रियाय पापं भवति वैश्यकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्मा द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोःस वैश्यतया जिज्यूषितो. अथ यद्यपः, शूद्राणां स भक्षो शूद्रांस्तेन भक्षेण जिन्विष्यसि. शूद्रकल्पस्ते प्रजायामाजनिष्यते ऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकाम वध्यो यदा वै क्षत्रियाय पापं भवति शूद्रकल्पो ऽस्य प्रजायामाजायत ईश्वरो हास्मा द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः स शूद्रतया जिज्यूषितः ॥ २९ ॥

